# कविकल्पलता ।



महाकवि श्रीदेवेश्वरविरचिता ।

विद्वद्विहगाश्रयकल्पपादप महाराजाधिराज

श्री श्री श्री श्री श्रीमत् सुढलदेव

के, सि, आइ, इ, वामण्डाप्रदेशाधिपति

वाहादुरस्यानुमत्यनुसारेण

साहाय्येन च

पण्डित श्रीरामगोपाल कविरत्नभट्टाचार्य्येण

परिवर्द्धिता, संस्कृता, प्रकाशिता च ।



कलिकातानगर्य्याम्

सिद्धेश्वरयन्त्रे

मुद्रिता ।



खृष्टाब्दाः १८९५ ।

मूल्यम् १)

# विज्ञापनम् ।

एतत्प्राचीनमलङ्कारशास्त्रं मालवाधीश्वरमहामात्येन श्रीमद्वाग्भटसूनुना देवेश्वरेण सुललितसंस्कृतभाषया विरचितम्। पुस्तिकेयं ग्रन्थकृता चतुः पञ्च-षट्-सप्त क्रमेण द्वाविंशतिकुसुमविभूषित चतुःस्तवकविराजिता लतेव परिकल्पिता। आलोच्यैतामल्पेनाप्यायासेन मुग्धानामपि कवित्वं जायते का कथा पण्डितानाम्। एतादृशीमुपकारितामवलोक्य भविष्यत्यस्या अभावो मा भूदित्यनुध्याय चास्माभिरेषा यत्नेन मुद्रापिता प्रकाशिता च। यद्यधुनानया पाठकानां कवित्वप्रेप्सूनां काचिदुपकृतिर्भवेत्तदास्माकं सफलो यत्नोऽर्थव्ययश्चेत्यलम्।

श्रीरामगोपाल शर्म्मणः।

कलिकाता

शकाब्दाः १८१५

# कविकल्पलतायाः सूचीपत्रम् ।



इति सूचीपत्रं समाप्तम् ।

# कविकल्पलता ।



गङ्गावारिभिरुक्षिताः फणिफणैरुत्पल्लवास्तच्छिखाः
रत्नैः कोरकिताः सितांशुकलया स्मेरैकपुष्पश्रियः ।
आनन्दाश्रुपरिप्लुताक्षिहुतभुग्धूमैर्मिलद्दोहदा
नाल्पं कल्पलताः फलं ददतु वोऽभीष्टं जटा धूर्जटेः ॥

मालवेन्द्रमहामात्यः श्रीमद्वाग्भटनन्दनः ।
देवेश्वरः प्रतनुते कविकल्पलतामिमाम् ॥

प्रतिभा-भावितात्मानः कवित्वं के न कुर्वते ।
अन्ये तु कविताधानकुशला विरलाः पुनः ॥

यदन्यैर्वन्यैर्न क्षुण्णं तत्र सञ्चरतो मम ।
पदे पदे प्रस्खलतः सन्तः सन्त्ववलम्बनम् ॥

कविशिक्षाशतं वीक्ष्य कवीन्द्रानुपजीव्य च ।
निबद्धेयं मया धीरास्त्वरितश्लोकसिद्धये ॥

सुवृत्तरम्यस्तवका सदालिपरिशीलिता ।
कविकल्पलताख्येयं कविशिक्षा निषेव्यताम् ॥

शब्द-श्लेष-कथार्थाख्याश्चत्वारः स्तवका इह ।
ते चतुः-पञ्च-षट्-सप्त-कुसुमैरन्विताः क्रमात् ॥

तत्राद्यस्तवके छन्दोऽभ्यासः सामान्यशब्दकाः ।
वर्णस्थितिरनुप्रासः कुसुमानि यथाक्रमम् ॥

अथ शब्दस्तवके छन्दोऽभ्यासः ।

छन्दोऽभ्यासप्रसूनेऽत्र नेत्रभूता विपश्चिताम् ।
कथ्यन्ते केऽपि शब्दा यैश्छन्दो मन्दोऽपि विन्दति ॥

श्रीर्लक्ष्मीः कमला पद्मालया च हरिवल्लभा।
दुग्धाब्धितनया क्षीरसागरापत्यमित्यपि॥
क्षीरपाथोधितनयेत्येवमेकाक्षरादिकम्॥
आदौ साध्यं पदं स्थाप्यं शेषं कुर्य्याद्विशेषणैः।
विशेष्यार्थो वर्णाकाराधाराधेयक्रियागुणैः।
साहृश्यपरिवाराद्यैः क्रियेत सविशेषणः॥

यथा सुधांशुर्धवलोऽतिवृत्तः कान्तान्तरिक्षो हरिणं दधानः।
सद्वृत्तमोघ्नन् जनतापहारी मृगेन्द्रवद्राजति ऋक्षमध्ये॥

बन्धुचौरः सुहृद् वादी कल्पः प्रख्यः प्रभः समः।
देशीय-देश्य-विप्राभाः सोदराद्या इवार्थकाः॥
यथेन्दुबन्धु मुक्ता-श्री-चौरो हार-श्रियः सुहृत्।
कुन्दवादी हंसकल्पः क्षीरप्रख्यो हिमप्रभः॥
गङ्गासमोऽब्जदेशीयः शेषदेश्यः सुधारिपुः।
विषाभस्ते यशोराशिः कैलासोदरसोदरः॥
कथानगरसर्वार्थनित्यकृत्यादिवर्णनैः।
लोकानां दृष्टचेष्टाभिश्छन्दोऽभ्यासक्रमो यथा॥
आसीद्दशरथो राजा चत्वारस्तस्य सूनवः।
राम-लक्ष्मण-भरत-शत्रुघ्नाश्चेति विश्रुताः॥
ध्वस्तध्वान्तभरं रत्नवेश्मविसोररश्मिभिः।
राजधानी दिनस्येव तत्पुर द्योतते सदा॥
स्थाली भात्यन्नपूर्णयमर्णोभिः शोभते घटः।
पटः संदृश्यते सूक्ष्मः साक्षाल्लक्ष्मीरियं वधूः॥
प्रातः कृतश्रमः स्नातोऽर्चितदेवो हुतानलः।
भुक्तान्नः श्रुतसच्छास्त्रः सायं शय्यागृहं ययौ॥
पुष्पाणि पाणिदेशेऽसौ कृत्वा क्रीड़ति कामुकः।
ताम्बूलिकोऽत्र ताम्बूलमस्य पश्चार्पयत्यसौ॥

तदर्थान्यपदेस्वान्यश्लोकस्य परिवर्त्तनात्।
तत्रैव छन्दस्यभ्यस्येदथ छन्दोऽन्तरे यथा॥
प्रत्यर्थिपृथिवीपाल तमोजालदिवाकरः।
नीतिप्रततिपर्थ्यन्यो राजते पृथिवीपतिः॥
प्रत्यर्थीकावनीकान्तध्वान्तविध्वंसनांशुमान्।
नयवल्लीनवाम्भोदः शोभते भूमिवल्लभः॥
प्रत्यर्थिपृथ्वीहृदयाधिनाथध्वान्तौघविध्वंसनवासरेशः।
सन्नीतिवल्लीनववारिवाहो विश्वम्भराया दयितो विभाति॥
दुर्धरारिधरणीधरोद्धतध्वान्तमण्डलविखण्डनांशुमान्।
नीतिवल्लीनव नूतनाम्बुदो मेदिनीपरिवृढोऽधिराजते॥
यतिभङ्गो नामधातुभागभेदे भवेत् यथा।
पुनातु नरकारिश्चक्रभूषित-कराम्बुजः॥
द्विविषद्वन्दवन्द्यं वन्दे गोविन्दपदाम्बुजम्॥
स्वरसन्धौ तु न श्रीशोऽस्तु भूत्यै भवतो यथा॥
न स्यादिद्भक्तिभेदे भात्येष राजेति कुत्रचित्।
क्वचित्तु स्याद् यथा देवाय नमश्चन्द्रमौलये॥
चादयो न प्रयोक्तव्या विच्छेदात् परतो यथा।
नमः शिवाय कृष्णाय च दानवविनाशिने॥
एकस्वरोपसर्गेण विच्छेदः श्रुतिसौख्यकृत्।
यथा पिनाकपाणिं प्रणमामि स्मरनाशनम्॥
एवं यथायथोद्वेगः सुधियां नोपजायते।
तथा तथा मधुरतानिमित्तं यतिरिष्यते॥
अवद्धार्थापि मधुरा मनो हरति भारती।
तमोनिचयशङ्काशा मञ्जुला देवकोकिलाः॥
इति शब्दस्तवके छन्दोऽभ्यासो नाम प्रथमं कुसुमम्।

---

अथ शब्दस्तवके सामान्यशब्दः।

सामान्यशब्दाः कथ्यन्ते क्रमादेकाक्षरादयः।
श्री भो हे हि नु निः मं नि प्रं वि प्राक् द्राक् सुसद् यथा॥
श्रीकृष्ण भोः केशव हे हरे द्राङ्निष्पीड़िताऽरे सुमतिं प्रयच्छ।
निकाममासेव्य विभासि नु त्वं सद्योगिनां चेतसि सङ्गतो हि॥

इत्येकाक्षरम्।

स्फुटं स्फूर्य्यत् स्फुरत् स्फारं सारं तारं वरं परम्।
प्रागग्र प्राज्यं प्रियं प्रेष्ठं ज्येष्ठं श्रेष्ठं मुहुर्वहु॥
कौर्य्यं कार्य्यं कम्रं कान्तं मञ्जु मंचु महन् मिलत्।
वाढ़ं गाढ़ं दृढ़ं प्रौढ़ं वल्गु बल्गात् ललत् लसत्॥
स्वैरं सम्यक् सदा शश्वत् सत्यं नित्यं ध्रुवं द्रुतम्।
धूर्य्यं वर्य्यं पुनः प्रायः सुष्ठु सद्यो भृशं लसत्॥
ननु नाम किल क्रीडत् चञ्चत् चारु जवात् खलु।
श्रीमत् प्रोच्चैः शनैर्माद्यत् रिङ्गद्राजच्चिरं परि॥

इति द्व्यक्षरम्।

झटिति प्रकटं सपदि प्रसभं निविडं सुभगं सुचिरं प्रवरम्।
विहसद्विकसद् विलसद् विचरद् विमलं सकलं बहुलं प्रवलम्॥
सर्वदा सर्वथा सर्वतः शीघ्रतः सत्वरं सन्ततं निश्चितं वेगतः।
उच्चकैरञ्जसा नित्यशः सुन्दरं पेशलं मञ्जुलं प्रोल्लसत् विस्फुरत्।
प्रोद्दामद् विभ्राजदुत्तुङ्गद् विस्फूर्ज-
दुत्तान शोभाढ्य विस्फार विक्रीड़त्।
सच्छाय सच्छोभ निःशङ्क निःशेष-
मित्थं बुधैस्त्र्यक्षराणि प्रयोज्यानि॥

इति त्र्यक्षरम्।

मनोरमं मनोहरं समन्ततः समीहितम्।
वरद्युतिं स्फुरत्प्रभं महोज्ज्वलं जलच्छवि॥

रयादेव जयादेव सर्वकालं सुनिश्चितम्।
स्फारशोभं प्रभायुक्तं स्फुरच्छायं श्रियान्वितम्॥
वराभोगं वरश्रीकं लसत्कान्ति स्फुरद्यशः।
घनच्छायं झटित्येव शोभायुक्तं विकस्वरम्॥

इति चतुरक्षरम्।

प्रवरश्रीकं रुचिरच्छायं स्फुटलक्ष्मीकं बहुलश्रीमत्।
कलया युक्तं विलसद्रोचिः प्रचुरज्योतिर्द्युतिरोचिष्णुः॥
विलसच्छवि प्रसरत्प्रभं प्रसरद्रसं सुषमामयम्।
बहुवैभवं रुचिभासुरं कलयान्वितं बलवर्जितम्॥
स्फुरितोदयं खचितं श्रिया विकटोच्छ्रयं प्रमदालयम्।
घनविभ्रमं भुवनाद्भुतं वरदीधिति द्युतिसुन्दरम्॥

इति पञ्चाक्षरम्।

अद्भुतवैभव मन्द्रिमहोत्सव मुज्ज्वलभाषित भूरितरद्युति।
कान्तिनिकेतन मिद्धतमाकृति चारुतरद्युति सुन्दरदीधिति।
मनोहरच्छायसुदञ्चितद्युति स्फुरत्प्रभाचारु घनश्रियान्वितम्।
समुल्लसत्कान्ति विभावितकृति नियोज्यमेवन्तु षडक्षरं पदम्॥

इति षडक्षरम्।

समुल्लसितशोभाढ्यो रोचिर्निचयरोचिमः।
चारुचञ्चत्पलाशाक्षी कान्तिकान्तिनिकेतनम्॥
वल्गु वलाद्वपुर्लक्ष्मीर्महामन्द्रिममन्दिरम्।
आभासम्भारसंशोभी दीप्तिमण्डलमण्डितः॥
प्रभाप्राग्भारसारश्रीकव्यवृद्धतरद्युतिः।
मनोरमतमच्छायो विभावैभवशोभितः॥
चमत्कारकरस्फारः प्रभाप्राग्भावभासुरः।
मनोरमतमक्रीडत् कान्तिमण्डलमण्डितः॥
मनोहरतरस्फूर्जं दूर्जस्वलकलोज्ज्वलः।

अत्यद्भुतवपुर्लक्ष्मीक्षोभितक्षितिमण्डल: ॥
मनोहरतरोच्छ्राय कायच्छायाचयान्वित: ।
प्रीतिस्फीतिकरप्रेङ्खत् प्रभासंहतिसंहित: ॥
विस्फुरद्रश्मिविस्मेर विस्मयाविष्टविष्टप: ।
नयनानन्दनोद्दाम रमणीयकमन्दिरम् ॥

इत्यष्टाक्षरम् ।

अवनीतलवर्त्तिदृशामस्रुतांशु: सम्पदेकंकुलगेहम् ।
चित्ताकर्षं महौषधिवास: कीर्त्तिकेतकया: ॥

परिस्फुरत्कान्तिभरप्रचारक: स्वपीड़नेनापि परोपकारक: ।
समीपभाजां हृदयैकहारक: स्वभावसौन्दर्य्य विशेषभूषक: ॥
जगत्प्रमोदोदयदानसज्जन: शुभौघलब्ध प्रबल प्रशसन: ।
नियन्त्रितानेकमनस्तुरङ्गम: स्थिरीकृतालोककदृग्विहङ्गम: ॥
प्रमोदपात्रीकृतसर्वभूतल: प्रतिक्षणक्षीणगुणोर्म्मिशीतल: ।
समुल्लसद्दीधितिपुञ्जमञ्जुल: समस्तचित्तोत्सवकृत् स्वभावत: ॥
जगत्त्रयैकान्तमनोज्ञताभूरनन्यसाधारणकान्तिकान्त: ।
अव्याजमाधुर्य्यसुधानिधानं मनोविहङ्गाहरणैकपाश: ॥
निरवद्यसमुद्यदुज्ज्वलस्वगुणश्रेणिमनोहराकृति: ।
त्रिजगज्जनचित्तचित्रकृन्नयनानन्दसिताभ्रवर्त्तिका ॥
अवनीतलवर्त्तिलोचनामृतवर्त्ति: प्रमदैकमन्दिरम् ।
घनविस्मयचित्रशालिका हृदयाम्भोरुहभानुमण्डल: ॥
हृद्यतरद्युति वारिपयोधिर्लोकविलोचनशीतमयूख: ।
चारुतमापघनौघनिवेशो भूवलयस्थितविस्मयहेतु: ॥
मुख्यस्वामीसम्पदां सम्मदानां लीलाशालाभाविताशाविताने: ।
पुंसां नेत्रचेत्रपीयूषवृष्टिर्विश्वोद्दामाश्चर्य्यहर्म्यैकशैल: ॥
उद्यदुज्ज्वलगुणौघ मेदुरो रामणीयक विलासमन्दिरम् ।
सुन्दरावयवसन्निवेशन: कान्तिकान्तभरभासुराकृति: ॥

गुणमणिप्रकरैकमहोदधिः सकललोकविलोचनचन्द्रमाः।
विलसदुज्ज्वलकान्तिनिकेतनं सहृदयौघचमत्कृतकारणम्॥
लसदङ्गरुचिप्रचयेन युतो नयनौघमधुव्रतफुल्लवनम्।
हृदयाब्जविजृम्भणतीक्ष्णकरो घनविस्मयसम्मदवासगृहम्॥
मण्डितपुञ्जमञ्जुप्रसर्पत्प्रतीकप्रभापूरदूरावधूतान्धकारः।
मनोमीनहर्षप्रकर्षैकवर्षं दृगम्भोरुहानन्दसन्दोहहेतुः॥
अखिलजगदवेक्ष्यमाणलक्ष्मीः स्वगुणविराजिभिरङ्गकैः प्रशस्यः।
लसतिरतिवलक्षपक्षचन्द्रप्रकरविजित्वरकीर्त्तिकौमुदीनाम्॥

निःशेषलोकपरितोषकरस्वरूपः
शोभान्वितावयवसुन्दरसन्निवेशः।
दूरं निरस्तखलदूर्वचनावकाशो
व्याजृम्भमाणगुणसंग्रहणप्रवीणः॥
प्रव्यक्त तत्तदखिलावयवानवद्यः
प्रोद्यन्निजोज्ज्वलगुणप्रकराभिरामः।
आनन्दिभिः सहृदयैरभिनन्द्यमानः
सुप्रक्रियाभिरभितः सुविराजमानः॥
कुतुकतरलचित्तैः सज्जनैः स्तूयमान-
स्त्रिभुवनजननेत्रश्रोत्रपीयूषवृष्टिः।
अविकलसमुदञ्चद्रूपसम्पन्निधानं
सकलमलविमुक्तः साधुवादेन युक्तः॥
सुखरखरखरोन्निध्वान्तविध्वंसनेन्दु-
र्विलसदमलकायव्याप्तानन्तकान्तिः।
अननुगुणमणिश्रीश्रेणिविश्रामधाम-
क्षयितनिखिलदोषः सर्वसन्तोषहेतुः॥
समुद्यत्प्रत्यङ्गं प्रसृमरमनोज्ञद्युतिभरो
मनोमीनाकृष्टि प्रबलवडिशं कामम्गयोः।

घनाश्चर्य्यस्थानं जगति कुतुकोत्तानितदृशां
नराणामानन्दामृतलहरि दुग्धाम्बुधिरयम् ॥
उच्चैःश्वेतोहरिणहरणाखर्वगन्धर्वगीतम्।
तं तं नेत्रावलिमधुलिहां माकरन्दप्रवाहः।
सर्वाश्चर्य्यप्रदसमुदयद्रूपसम्पन्निधानं
चञ्चत्कान्तिप्रचयनिचयच्छन्नसम्पन्नगात्रः ॥
सकलजनताचित्ताश्चर्य्यप्रदप्रकटोल्लसन्-
मधुरिमपरीपाकोद्रेकस्फुरं द्युतिसुन्दरः।
नयनललितानन्दोल्लासग्रहाधिपमण्डलो
मिलदवयवश्रीवीचिष्णुर्निजान्वयभूषणम् ॥
लसद्घनरसच्छटानयनमीनयोर्जन्मिना-
मुदञ्चदतिसुन्दर प्रसृमर प्रभाभास्वरः।
अनन्तगुणमन्दिरं सुभगतालतामण्डपः
समस्तजनविस्मयप्रदसमुल्लसत्स्वाकृतिः ॥
अवयवसन्निवेश जितसर्वमनोज्ञचयो
घनवसुधाजनेक्षण सुधारससेचनकम्।
सहृदयमानसाम्बुजविजृम्भणतीक्ष्णकरो
द्युतिभरभाविताकृतितयातिचमत्कृतिकृत् ॥
सर्वावद्यनिवारकः कृतपरीरम्भः समस्तैर्गुणै-
रानन्दैकनिदानमालवपतिः क्ष्मावासिराशिस्तुतः।
उन्मीलन्निजकान्तिकेतकसमाकृष्टाक्षिपुष्पाक्षयो-
र्विद्यन्मानसराजहंसविसरावासाय सौधं सरः ॥
सान्द्रानन्दसुधासमुद्रलहरी साम्राज्यमग्नात्मभिः
सर्वैः सर्वकलाकलापकुशलैः साकाङ्क्षमुद्वीक्षितः।
उद्यद्दृश्यतरोरुकान्तिपटली विन्यासरम्याकृतिः
साधारण्यपदव्यतीतसहजोन्मीलत्तनुश्रीभरः ॥

अङ्गप्रत्यङ्गरङ्गत् प्रचुरतरमहाकान्तिभाराभिरामो
निर्व्याजभ्राजमानानुगुणनिजगुणग्रामविश्रामधाम।
लोकैरालोकमानः प्रमदजनपरिव्यक्तनेत्रारविन्दे-
रानन्दस्यैकसौधः सकलवसुमतीमण्डलीसारभूतः॥

एवं साधारणैः शब्दै रौचित्येन निवेशितैः।
दत्तैश्छन्दःसु सर्वेषु कर्त्तव्यं पदयोजनम्॥

अथ संस्कृतप्राकृतयोः समाः।

हाराहार विहार सार सरसाः सम्भोगरोगासुराः
संहारामर वारवारण गणाष्टङ्कार ताराकराः।
लोलोल्लोलविलास वायसहराहङ्कार हीराङ्कुरा
नीहारोरगराग ताल तरला गोविन्द कन्दोदराः॥

तरुणतरणिदासा मोहसन्दोहभासाः
खुरखरतरुघासाः वासरारम्भहासाः।
कर करि किरि कीराः कोल कल्लोल धीरा
मलमलयकरीरा वामदेवासि वीराः॥

नरनरककरङ्का दण्डचण्डालरङ्का
दर-सरल-कलङ्काः कम्बलाकारपङ्काः।
खलबहुलकुरङ्गा देहसन्देहसङ्गाः
पर-कुरर-तरङ्गाश्चारुसञ्चारभङ्गाः॥

अरिहरि-परिणाहाः कण्ठ-कुण्ठाहिदाहाः
परिसर परिणाहा मञ्जु-मञ्जीर-वाहाः।
अचल-कुलकुमाराः कुम्भकुम्भीरसाराः
विरल-कवलजाराः सुन्दरोदारपाराः॥

जम्बीर केशरि वराह सुरारि कालाः
काकोल कुन्तल चमूरु विराम वालाः।
आलोल बाहु रण सङ्गर चोल तालाः

संसार केरल समीरण टङ्क भाला: ॥
आसार चामर कुलीर तुरङ्ग सूरा:
कङ्काल कन्दल कराल विकासपूरा:।
हेरम्ब कम्बु विधु सिन्धु बुधानुबन्धा:
कुन्देन्दु मन्दर समीर समूह गन्धा: ॥
भीमाङ्क शङ्कर किरीट तमाल कुञ्जा
हिन्ताल तोमर महीरुह विम्ब पुञ्जा:।
डिण्डीर पिण्ड वर सम्बर कोण काणा:
संरम्भ सोम परिरम्भ विकार वाणा: ॥
वसन्तावास वेशन्त वासवासव वासरा:
कासार सार सरसा: किरणारुणवारणा: ॥
एते पुंलिङ्गा:।
हेला खेला कला माला रसाला काहलाऽचला।
कीला लीला ऽवला बाला लोला दोला वसा मसी ॥
धरणी धारणी गोणी रोहिणी रमणी मणी।
वीणा वाणी रमा वेणी रीढ़ा गङ्गा तरङ्गिणी ॥
कन्दली लहरी नारी रामा भेरी वसुन्धरा।
काली कराली चामुण्डा चण्डा रण्डा तुला मही ॥
एते स्त्रीलिङ्गा:।
जल फल पल मूलं वारि कीलाल तूलं
वन पलल दुकूलं लिङ्ग गम्भीर कूलं
सलिल कमल चीरं तुच्छ राजीव नीरं
हल रजत कुटीरं दारु नालं पटीरम्।
कारणं रोहणं चेलं कुहराम्बर मन्दिरम्।
कुड्मलं मण्डलं तामरसं कुण्डलमङ्गदम् ॥
पुरारविन्द लोहाङ्ग तड़ाग करणं कुलम्।

तोरणं मरणं तुङ्ग मलमागार भासुरम् ॥

एते नपुंसकलिङ्गाः।

भण देहि गच्छ संहर कुरु चोरय मारयावगच्छेहि।
अवलोकयावचिन्तय खादय चेति धातुजं विद्धि ॥

अथ निरोष्ठ्याः।

नीहार हार हरिणाङ्क हराट्टहास
कैलास कास रद नारद सिंह सङ्घाः।
शेषाहि हंस घनसार हरीन्द्र नाग
हिण्डीर निर्भर शरद्घन चन्द्रकान्ताः॥
शृङ्गार सागर तड़ाग जड़ाग याग
हर्य्यक्ष तक्षक नख क्षत दीक्षिताक्षाः॥
नाराच काच कच कीचक चञ्चरीक
चाणक्य चारण गण क्षण काण शोणाः।
संसार सार सरलारि रसाल साल
कङ्काल काल कलि शैल खलालकार्काः॥
किञ्जल्क कल्क कर शङ्कर कीर हीर
लङ्केश केश गर केशव देश लेशाः।
आनन्द नन्दन धनञ्जय खञ्जरीटाः
कीटाग्नि कण्टक कटाह कटाक्ष यक्षाः॥
दक्षाङ्ग यज्ञ जनकाञ्जलि यन्त्र यत्ना
रत्नाकरान्धक धराधर धीर सीराः।

एते पुंलिङ्गाः।

गङ्गा गीता सती सीता सिद्धिः सन्ध्या गया गदा।
आशीः काशी निशा नासा कान्तिः शान्तिर्दया दशा॥
आर्द्रा निद्रा हरिद्रा दृक् द्राक्षा लाक्षा धृतिः क्षतिः।
छाया जाया कथा कान्ता धात्री रात्री रतिर्गतिः॥

कम्बरा धारणा धारा तारा कारा जरा धरा।
आजी राजी रजन्यर्त्तिः कीर्त्तिः कन्या तटी नटी॥
नारी सारी दरी दासी घटिका खटिका जटा।
कक्षा रक्षा शिखा सङ्ख्या कालिन्दी कलिकालका॥

एते स्त्रीलिङ्गाः।

चरण करण चक्रं क्षेत्र नक्षत्र तक्रं
रजत शत शरीरं क्षीर नीराक्षि तीरम्।
धन कनक निधानं ध्यान सन्धान दानं
नलिन नगर गात्रं छत्र नेत्रास्थि दात्रम्॥

आलिङ्गन स्नान शिरश्चरित्रं जल स्थल स्थान कलत्र चित्रम्।
कीलाल जालालिक नाल दैत्यं लिङ्गाङ्गणारण्य हिरण्य सैन्यम्॥

अञ्जनाजिन यानासृक् काञ्चनानन काननम्।
हाटकं नाटकं नाट्यं तैलं चैलं रसातलम्॥
अदनं सदनं ज्ञानं निदानं दधि चन्दनम्।
अक्षरं लक्षणं लक्ष्यं शस्त्रं शास्त्रं दलं हलम्॥

एते नपुंसकाः।

आशास्तेऽस्ति चकास्ति निन्दति सृजत्याशंसति क्रीड़ति
ध्यायत्यर्चति याचते द्यति हरत्याराध्यति त्रस्यति।
शेते गच्छति यच्छतीच्छति नयत्यायाति हन्तीहते
भाति स्नाति दधाति याति जयतीत्याद्या क्रियाश्चिन्तयेत्॥

इति प्रथमस्तवके सामान्यशब्दो नाम द्वितीयं कुसुमम्।

---

अथ शब्दस्तवके वर्ण्यस्थितिः।

अथ वर्ण्यानि कथ्यन्ते तानि यानि कवीश्वरैः।
महाकाव्यप्रभृतिषु प्रबन्धेषु ववन्धिरे॥

राजा-राजवधू-पुरोहित-कुमारामात्य-सेनाधिपा
देश-ग्राम-पुरी-सरोऽब्धि-सरिदुद्यानाद्यरण्याश्रमाः।
मन्त्री दूत रणप्रयाण मृगयाश्वेभर्त्तुविन्दूदया
वीवाहो विरह-स्वयंवर-सुरा-पुष्पाम्बुखेला-रतम्॥
देव्याः सौभाग्य-लावण्य-शील-शृङ्गार-मन्मथाः।
त्रपा-चातुर्य्य-दाक्षिण्य-प्रेम-मान-व्रतादयः॥
वेणीधम्मिल्लसीमन्तभालश्रवणनासिकम्।
कपोलाधरनेत्रभ्रूकटाक्षरदकन्धराः॥
गण्डबाहुकरोरोजनाभिमध्यवलित्रयम्।
रोमाणि श्रोणिजङ्घोरुपादयुग्मनखक्रमात्॥
पुरोहितो हितो वेदस्मृतिज्ञः सत्यवाक् शुचिः।
ब्रह्मण्यो विमलाचारः प्रतिकर्त्तापदाम्बुजः॥
कुमारशस्त्रशास्त्रश्रीकलानलगुणोच्छ्रयाः।
वाह्यालीखुरलीराजभक्तिः सुभगतोदयः॥
मन्त्री भक्तः शुचिः शूरोऽनुरक्तो बुद्धिमान् क्षमी।
आन्वीक्षिक्यादिकुशलः परिच्छेदी सुदेशजः॥
सेनापतिर्जितायासः स्वामिभक्तः सुधीरधीः।
अभ्यासी वाहने शस्त्रे शास्त्रे च विजयी रणे॥
देशे रत्नखनिद्रव्यपण्यधान्याकरोद्भवाः।
दुर्गग्रामजनाधिक्यनदीमातृकतादयः॥
ग्रामे धान्या लता वृक्षसरसी पशुपुष्टयः।
क्षेत्रारघट्ट केदार ग्रामेयी मुग्धविभ्रमाः॥
पुरेऽट्ट परिखा वप्र प्रतोली तोरण ध्वजाः।
प्रासादाध्व प्रपाराम वापी वेश्या सतीश्वरी॥
सरस्यम्भो लहर्य्यम्भो गजाद्यम्बुजषट्पदाः।
हंसचक्रादयस्तीरोद्यान स्त्रीपान्थकेलयः॥

अब्धौ द्वीपाद्रि-रत्नोर्मि-पोत-यादो-जलप्लवाः।
विष्णुः कुल्यागमश्चन्द्राद्वृद्धिरौर्वोऽब्दपूरणम्॥
सरित्यम्बुधियायित्वं वीच्यो जलगजादयः।
पद्मानि षट्पदा हंसचक्राद्या कूलशाखिनः॥
उद्याने सारणिः सर्वफलपुष्पलताद्रुमाः।
पिकालिकेकिहंसाद्याः क्रीड़ावाप्यध्वगस्थितिः॥
शैले मेघौषधीधातुवंशकिन्नरनिर्झराः।
शृङ्गपादगुहारत्नवनजीवाद्युपत्यकाः॥
अरण्ये हि वराहेभयूथसिंहादयो द्रुमाः।
शुककाककपोताद्या भिल्लभल्लगवादयः॥
आश्रमेऽतिथिपूजेण विश्वासो हिंस्रशान्तता।
यज्ञधूमो मुनिसुता द्रुसेको वल्कलं द्रुमाः॥
मन्त्रे पञ्चाङ्गता शक्ति-षाड़्गुण्योपाय-सिद्धयः।
उदयाश्चिन्तनीयाश्च स्थैर्योन्नत्यादिसूक्तयः॥
दूते स्वस्वामि तेजः श्री विक्रमौन्नत्यसद्वचः।
शत्रुक्षोभकरी चेष्टा धार्ष्ट्यं दाक्ष्यमभीरुता॥

युद्धे तु वर्म्म-बल चार रजांसि तूर्य-
निस्वान-नाद-शर-मण्डल-रक्तनद्यः।
छिन्नातपत्र-रथ-चामर-केतुकुम्भि-
मुक्ताः सुरीहृतभटाः सुरपुष्पवृष्टिः॥

प्रयाणे भेरिनिस्वानभूकम्पबलधूलयः।
करभोक्षध्वजछत्रवणिक्शकटवेशराः॥
मृगयायाञ्च सञ्चारो वागुरा नीलवेषिता।
भटढक्का मृगत्रासः सिंहयुद्धं त्वरा गतिः॥
अश्वे वेगित्वमौन्नत्यं तेजः सल्लक्षणस्थितिः।
खुरोत्खातरजोरूपं जातिर्गतिविचित्रता॥

गजे सहस्रयोधित्वमुच्चत्वं कर्णचापलम्।
अरिव्यूहविभेदित्वं कुम्भ-मुक्ता-मदादयः॥
सुरभौ दोलाकोकिलमारुतसूर्य्यगतितरुदलोद्भेदाः।
जातीतरपुष्पचयाम्रमञ्जरीभ्रमरझङ्काराः॥
ग्रीष्मे पाटलमल्लीतापसरः पथिकशोषवातोल्काः।
शक्तुप्रपाप्रपास्त्रीमृगतृष्णाम्रादिफलपाकाः॥
वर्षासु घनशिखिस्मयहंसगमाः पङ्ककन्दलोद्भेदौ।
जातिकदम्बकेतकझञ्झानिलनिम्नगाहलिप्रीतिः॥
शरदीन्दुरविपटुत्वं जलाच्छतागस्त्यहंसवृषदर्पाः।
सप्तच्छदपद्मसिताभ्रधान्यशिखिपक्षमदपाताः॥
हेमन्ते दिनलघुता शीतयवस्तम्बमरुवकहिमानि।
शिशिरे करीषधूमकुन्दाम्बुजदाहशिशिरोत्कर्षाः॥
सूर्य्येऽरुणता रविमणिचक्राम्बुजपथिकलोचनप्रीतिः।
तारेन्दुदीपकौषधिद्युकतमश्चौरकुमुदकुलटार्त्तिः॥
चन्द्रे कुलटा चक्राम्बुजमानविरहितमोऽर्त्तिरौज्ज्वल्यम्।
जलधिजलनेत्रकैरवचकोरचन्द्राश्मदम्पतिप्रीतिः॥
विवाहे स्नानशुद्धाङ्गभूषोलूलुत्रयीरवाः।
वेदौ सङ्गीतभावेच्छा लाजमण्डलवर्त्तनम्॥
विरहे तापनिःश्वासचिन्तामौनकृशाङ्गता।
अब्दसंख्या निशादैर्घ्यं जागरः शिशिरोष्णता॥
स्वयम्बरे शचीरक्षा मञ्च-मण्डप-सज्जता।
राजपुत्री नृपाकारान्वयचेष्टाप्रकाशनम्॥
सुरापाने विकलता स्खलनं वचने गतौ।
लज्जा मानच्युतिः प्रेमाधिक्य रक्ताक्षता भ्रमः॥
पुष्पावचये पुष्पावचयः पुष्पार्पणेऽर्थिता दयिते।
शाखा गोत्रस्खलनेर्ष्या वक्रोक्तिसम्भ्रमाश्लेषाः॥

जलकेलौ सरःक्षोभश्चक्रहंसापसर्पणम्।
पद्मम्लानि पयोविन्दु दृग्रागो भूषणच्युतिः॥
सुरते सात्विका भावाः शीत्काराः कुञ्चलाच्युता।
काञ्चीकङ्कणमञ्जीररवोऽधरनखक्षतिः॥
वर्ण्येषु वर्ण्यभावानां दिङ्मात्रमिह दर्शितम्।
सुधीभिश्चिन्त्यमानानां भवत्येवमनन्तता॥
असतोऽपि निबन्धेनानिबन्धेन सतोऽपि च।
नियमेन च जात्यादेः कवीनां समयस्त्रिधा॥

असतोऽपि निबन्धो यथा।

रत्नानि यत्र तत्राब्धौ हंसाद्यल्पजलाशये।
जलेभादि नभोनद्यामम्भोजाद्यं नदीष्वपि॥
तिमिरस्य तथा मुष्टिग्राह्यत्वं शुचिभेद्यता।
अञ्जलिग्राह्यता कुम्भेऽपवाह्यत्वं विधुत्विषः॥
शुक्लत्वं कीर्त्तिपुण्यादौ कार्ष्ण्यञ्चाकीर्त्तिपापयोः।
प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः॥
विभावर्य्यां भिन्नतटाश्रयणं चक्रवाकयोः।
कामिनान्तेषु कुन्दानां कुड्मलेषु च रक्तता॥
हरितत्वं दिवा नीलोत्पलानाञ्च विकाशितम्।
वर्णयेन्न सदप्येतन्नियमोऽथ प्रदर्श्यते॥
भूर्जत्वग्घिमवत्येव मलये ह्येव चन्दनम्।
सामान्यवर्णने शौक्ल्यं कलाम्भःपुष्पवाससाम्॥
कृष्णत्वं केशकाकाहि पयोनिधि पयोमुचाम्।
रक्तत्वं रत-वन्धूक-विद्याम्भोज-विवस्वताम्॥
तथा वसन्त एवान्यपुष्टानां कलकूजितम्।
वर्षास्वेव मयूराणां रुतं नृत्यञ्च वर्णयेत्॥
नियमस्य विशेषोऽथ पुनः कश्चित् प्रकाश्यते।

कमलासम्पदोः कृष्णहरितोर्नागसर्पयोः ॥
पीतलोहितयोः स्वर्णपरागाग्निशिखाद्रिषु ।
चन्द्रे शशिएयोः कामध्वजे मकरमत्स्ययोः ॥
दानवासुरदैत्यानां ऐक्यमेवाभिसम्मतम् ।
बहुकालजन्मनोऽपि शिवचन्द्रस्य बालता ॥
मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः ॥
इति प्रथमस्तवके वर्णस्थितिर्नाम तृतीयं कुसुमम् ।

---

## अनुप्रासः।

अथो कथाद्रिकें राजवर्णनाद्युपयोगिनः ।
अनुप्रासस्य सिद्धर्थं शब्दान् कतिपयान् ब्रुवे ॥
वर्णानामनुवृत्तिर्या नातिदूरान्तरस्थितिः ।
अनुप्रासः स तेनैव सनाथा काव्यपद्धतिः ॥
गतालङ्कारशङ्कोऽपि काव्यबन्धो विराजते ।
वर्णाः सप्यार्णवोदीर्णसुधासंस्पर्द्धिनो यदि ॥
मृगनाभिसनाभिश्रीः श्रीकण्ठाकुण्ठकण्टकाः ।
सतो यतो यदच्छायो घनाघनघनद्युतिः ॥
स्वर्धुनी ते धुनीतेऽयं निर्यन्निर्जरनिर्झरा: ।
मेदुरा पादुरा पादामचता रच्चतात् चतात् ॥
अर्य्यमावर्य्यमाहात्म्यः कोकशोकविलोककृत् ।
कीनाशभीनाशकरः प्रवालप्रबलच्छविः ॥
घनाभोगेन भेगे त्वां सेवते देवतेश्वरः ।
वन्देऽहं गतसन्देहं विमलं कमलं तव ॥
स्फुर्जद्धुर्जटिसङ्काशः कोपगोपतिकेतनः ।
वैरिमर्द्दी पर्द्दीवाणस्तन्द्रस्य चन्द्रचूड़वत् ॥

रणे गणेशसङ्काशो गतार्त्तिः कार्त्तिकेयवत्।
श्रीमद्रामाभिरामश्रीः स त्रिविक्रमविक्रमः॥
विश्वरूपस्वरूपश्रीः क्रतुः पुरुषपौरुषः।
श्रीवत्सलाञ्छनच्छायो धरणीधरदुर्धरः॥
विष्टरश्रवसाविष्टश्चघनाघनाभवत्।
विराज-राज-राजश्रीः पितामहमहामहाः॥
कश्चिच्चुश्चवनप्रायः पाकशासनशासनः॥
श्रीमानिन्द्र इवानिन्द्यः समन्युः शतमन्युवत्।
निविड़ोजा विड़ोजावदनघो मघवानिव॥
दम्भजम्भजिदम्भः प्रत्यूहव्यूह इवाञ्जितः।
महीमहीयान् संसारसारः शक्रपराक्रमः॥
सङ्कल्पकल्पवृक्षश्रीः प्रज्ञावज्ञातवाक्पतिः।
श्रीरङ्गवङ्गदङ्गश्रीर्वलिवालिवलाद्बली॥
नयज्ञो यज्ञपुरुषः शिपिविष्टनिविष्टधीः।
स्मरघस्मरसङ्काशो भाग्यसौभाग्यभाग्यसौ॥
धूर्य्यमाधुर्य्यवर्ज्यश्रीः कुशली मुषली यथा।
रुचिरो रुचिरोचिष्णुः क्षमया क्षमया समः।
काशसङ्काशसत्कीर्त्तिः सर्वदा सर्वदानकः॥
प्रीणाति प्राणिनामेष मनोहरमनोहरः।
महादेवमहादेवः करुणाकरुणालयः॥
तनयो विनयोपेतः केतकः श्वेतकीर्त्तिमान्।
राजते राजतेभाजिः कविराजिविराजितः॥
मणिद्युमणिदुष्प्रेक्ष्योज्ज्वलदुज्ज्वलभूषणम्।
उद्दामधामकामश्री धर्मकर्मणि शर्मभाक्॥
भूखण्डाखण्डलः काण्डचण्डकोदण्डपण्डितः।
प्रचण्डकुण्डलोद्दण्डगण्डमण्डलमण्डितः॥

सन्निधाननिधानन्ते करवं नरवन्दितम्।
नितरां नितराम्बूनि राजसे राजसेवकः॥
हारमणिरमणीया नाकनायकनायिका।
भाविता भावितानेन कलिता ललितालकैः॥
सन्ता कान्तालकान्तासौ श्रेयसां प्रेयसी भृशम्।
कन्दः कन्दर्पदर्पस्य पाटला पाटलाधरा।
खर्व्वीकृतोर्व्वशीगर्व्वा निर्व्वासितरतिद्युतिः॥
रमणीरमणीयासौ सुमनःसुमनःस्मिता।
शवरीकरवीरस्या प्रवराः समरास्तथा॥
पर्वतः सर्वतः श्रीमान् अधुना मधुना गतम्।
वृथा सुधा सुधाबुद्धिर्मुग्धा मुग्धाधरेऽधरे॥
सारद सारदन्तोऽयं रुचिरं सुचिरं न किम्।
असुना यमुनातीरे कैशवं शैशवं पुरा॥
स्फुरदक्षेण दक्षेण स्पष्टदृष्टमदृष्टतः॥
उग्रो गिरीशो गिरिशः शम्भुशोभाच्युतोऽच्युतः॥
कृष्णाकृष्णो हृद्यविद्यः सूर्य्यशौर्य्यो रविच्छविः।
भीमभीमो रुद्ररौद्रो धामधाम महामहा॥
मेधा वेधा जिष्णुजिष्णुः शूरशूरो ध्रुवो ध्रुवः॥
देवदेव कालकाल भीमभीम नामनाम।
रामराम धामधाम मांसमांस रक्षरक्ष॥
अरुणारुणः कपिशकपिशः सदावदात विसविसदः।
उन्मीलहीननीलश्रीः परितो हरितोऽतिकामतः श्यामः॥

नरा न राजन्ति सखे सखेदाः
प्रभा प्रभातेव कृशा कृशानोः।
वामोरुवामोरुपितो विधाता
मुक्तासि मुक्तासितकीर्त्तिना त्वम्॥

स्वःसिन्धुतीरेऽघविघातनीरे लसत्समीरे करलभ्यनीरे।
वसन् कुटीरे परिधाय चीरे करोत्यधीरे न रुचिं शरीरे॥
आनन्दतुन्दिलपुरन्दरमुक्तमन्दा-
मन्दारदामनिकुरम्बकरम्बितानाम्।
गङ्गामनङ्गरिपुतुङ्गतमोत्तमाङ्ग-
केशग्रहग्रहिलवीचिभुजां भजामि॥
इत्यमर्त्यनृपामात्ययुवत्याद्युपवर्णने।
शब्दान् पश्य यथौचित्यं चित्रानुप्राससिद्धये॥
सुखानुप्राससिद्ध्यर्थं ज्ञापयाम्यरमुच्यते।
आदिक्षान्तलिपौ कादि क्षान्तशब्दगवेषणम्॥
चित्रानुप्रासयमकशब्दनिश्चयलङ्घवेत्॥ यथा—
कल खल गल चल छल जल तल स्खल दल नल पल फल यल मल हलम्। कीर चीर जीर तीर धीर वीर नीर क्षीर चीरमेवमन्येऽपि।

यत् किञ्चिदथ न मया गदितं ग्रन्थस्य गौरवत्रासतः।
सत्कृतकविकल्पलतापरिमलतस्तद्बुधैर्ज्ञेयम्॥
इति अनुप्रासो नाम चतुर्थं कुसुमम्।

---

अथ श्लेषस्तवके उद्दिष्टवर्णनम्।

उद्दिष्टवर्णनं वर्ण्यप्रकीर्णं संख्यया सह।
रूढादिश्चेति पञ्चात्र कुसुमानि यथाक्रमम्॥
श्वेत्यादिभिर्विभिन्नस्योद्दिष्टवर्ण्यद्वयस्य यत्।
अभेदः क्रियते श्लेषात् तत् स्यादुद्दिष्टवर्णनम्॥
सितकृष्णौ विधुहरौ शितिताराभ्रकनागराजघनसाराः।
रामपयोराश्यर्जुनसिंहीजानन्तचन्द्रहासाद्याः॥

विधुश्चन्द्रो विष्णुश्च। हरिः कृष्णः सिंहश्च। शितौ धवलचकौ। तारा नक्षत्रं अक्ष्णः कनीनिका च। अभ्रकं गिरिजं घनश्च। नागराजः शेषो गजश्च। घनसारः कर्पूरं मेघश्रेष्ठश्च। रामो बलभद्रो दाशरथिश्च। पयोराशिर्दुग्धसमूहः समुद्रश्च। अर्जुनः शुभ्रः पार्थश्च। सिंहीजः सिंही राहुश्च। अनन्तो बलभद्रः कृष्णश्च। चन्द्रहासश्चन्द्रहास्यं खड्गश्च।

शङ्कर तारकेश सदाकाश व्योमकेशर तालाङ्काः।
नीलांशुकाधिकेशारिष्ट सदासिचयकलकण्ठाः॥

शङ्करः कम्बुकान्तिः कृष्णश्च। तारकेशश्चन्द्र उज्ज्वलबालश्च। सदाकाशः सर्वदाकाशः सङ्गगणश्च। व्योमकेशः शिवो नभोबाणो च। तालाङ्को बलभद्रस्तालकलङ्को च। नीलांशुको बलभद्रः कृष्णकान्तिश्च। अधिकेशो अधिकशिरोऽधिकबालश्च। अरिष्टश्चक्रवाकोऽरिष्टश्च। सदासिचयः सिचयो वस्त्रं असिचयः खड्गसमूहश्च। कलकण्ठो हंसः पिकश्च। "कलकण्ठः पिके पारावते हंसे कलध्वनौ।"

हरिजिष्णुवनाब्धिभ्यो गजाः सिन्धुर्मुरारितः।
अम्भोवाहोऽब्जानि कृष्णा यमुनाकुम्भिलीद्विषः॥

शुक्लश्यामाभिधायका भवन्तीति सम्बन्धः। सुरारिसिन्धुः गङ्गाकृष्णसमुद्रौ च। अम्बुवाह उच्चैःश्रवा मेघश्च। कृष्णाब्जं नाभिपुण्डरीकं नीलाब्जञ्च। यमुनारिर्बलभद्रो यमुनाद्वेषी च। कुम्भीरवैरी सिंहोऽगस्पर्द्धी च। कृष्णार्थात् तटिनीवाचकशब्दात् परो वरो योज्यः।

नीरदघनोपलसित सदाहिमकरसिन्धुवेणिपृथुलाजाभाः।

सितश्यामवाचका इति पूर्ववत्। कृष्णार्थात्तटिनीवाचकशब्दाद्वरो यथा। कृष्णनदीवरकान्तिः गङ्गाश्रेष्ठकान्तिः। पक्षे कृष्णनदीवरस्य समुद्रस्येव कान्तिः। नीरदो निश्चितो

दन्तो मेघश्च । घनोपलसितः घनोपलस्तद्वत् सितः । घनो मेघस्तद्वदुपलसितः ।

सदाधिकेशवच्छायोऽनेकपीयसमच्छविः ।
वपुर्मल्लोदधिच्छायं विभ्रत् सिन्दूरकान्तिमान् ॥
स्फटिकाचलसल्लक्ष्मीः पट्टांशुककटिं वहन् ।
धौताम्बरश्रियं धत्ते स्फटिकान्तश्रियान्वितः ॥
अर्जुनद्युतिविद्योतीत्येवमादि समुन्नयेत् ॥
रक्तश्वेतौ हरिशुचिपुष्करशतपत्रसूर्य्यकान्ताब्जम् ।
नवहंसमहापद्मार्कसोदराः कमलकीलाले ॥

हरिः चन्द्रसूर्य्ययोः । शुचिः श्वेत-वैश्वानरोः । पुष्करं जलपद्मयोः । शतपत्रं हंसपद्मयोः । सूर्य्यकान्तः स्फटिके सूर्य्यवत् कान्ते च । अब्जः शङ्खाम्बुजयोः । नवहंसः नवहंसे प्रत्यग्रसूर्य्ये च । महापद्मः श्वेतनागे पद्मे च । अर्कः स्फटिकसूर्य्ययोः । कीलालं जलरक्तयोः ।

सुहृद्रत्नादिभिर्भानो रत्नेनाग्नेरदांशुकैः ।
जलेभ्यो जन्म शोभाभः सरोजकुसुदारिभिः ॥

भानोः परस्मात् सुहृद्रत्नादिभिः सितरक्तौ यथा । रविमित्रं चन्द्ररवितुल्यश्च । भानुरत्नं सूर्य्यकान्तः रविपद्मरागौ च । अग्निरत्नं सूर्य्यकान्तोऽग्निपद्मरागौ च । रदांशुकं दन्तवस्त्रमधरश्च । जलशोभा जलजा चासौ शोभा चेति पक्षे पद्मकान्तिः । एवं सरोजारिशोभा सरोजस्पर्द्धिशोभा पक्षे सरोजारिश्चन्द्रः । कुसुदारिशोभा कुसुदस्पर्द्धिशोभा पक्षे कुसुदारिरादित्यः ।

पीतश्वेतौ गौरद्विजराजकपर्दशम्भुहरिताार्च्याः ।
हैमस्तोमाष्टापदमहारजतचन्द्रकलधौताः ॥

गौरः श्वेतपीतयोः । द्विजराजो गरुड़चन्द्रयोः । कपर्दः

शम्भुजटाजूटवराटयोः। शम्भु ब्रह्मत्रिलोचनयोः।

सुशोभितारकूटश्रीः स्वर्णस्तोमसमद्युतिः।
दहनोपलसत्कान्तिर्गाङ्गेयच्छविपेशलः॥

आरकूटोरूप्यसमूहः पक्षे रीतिः सुशोभनवर्णः कनकञ्च।

अथ श्लोकोत्तीर्णानि।

गोपतितार्क्ष्यकान्तिः रविगुरुच्छविः। पक्षे गोपतिरिन्द्रस्तस्य तार्क्ष्यस्तुरङ्गः। वासदेवगिरिर्मनोमनोज्ञोमेरुः कैलाशश्च।

लोहितनीलौ पुष्करहरिद्रुमकमलकृष्णरत्नानि।
सिन्दूरभूषणोत्पलधनञ्जयाम्भोजिनीदलानि॥

यथा पुष्करं पद्माकाशयोः। हरिः सूर्य्यकृष्णयोः। विद्रुमः प्रवालविशिष्टवृक्षयोः। कमलं पद्मपानीयजलयोः। कृष्णरत्नं कौस्तुभेन्द्रनीलयोः। सिन्दूरभूषणं सिन्दूरालङ्कारगजयोः। उत्पलसुत्कृष्टेन्दीवरयोः। धनञ्जयोऽग्निपार्थयोः। अम्भोजिनीदलं पत्रपुटकिन्योः।

कमलाधिपपद्मेशौ नागजित्कान्तसूर्य्यभूः।
रत्नाकरवरश्रीको सदाधिकमलद्युतिः॥

कमलाधिपपद्मेशौ सूर्य्यकृष्णौ। नागजित् गरुड़ो नागस्पर्द्धी च। कान्तः कमनीयः कं जलं तस्यान्तश्च। सूर्य्यभूः सूर्य्योद्भवो यमश्च।

सदा सिन्दूरसुज्जेता कलयन् कमलश्रियम्।
स्फुटशोभनताम्रश्रीर्वराहस्वामिदीधितिः॥

एवं सुसम्पन्नस्वःप्रभः विदूरमणिदीधितिः।
प्रवालप्रबलच्छायः कलभानुमितच्छविः॥

पीतश्यामो कृष्णाम्बरमधुजिद्ध्वान्तजेतारः।
विद्युत्कान्तध्वान्तद्वेषि हरिः स्वर्णच्छायाः॥

इति श्लेषस्तवके उद्दिष्टवर्णनं प्रथमं कुसुमम्।

अथ श्वेतानि ।

सुधांशूच्चैःश्रवः शम्भुकीर्त्ति ज्योत्स्नाशरद्घनाः ।
प्रसादसौधतगरमन्दारद्रु हिमाद्रयः ॥
सूर्य्येन्दुकान्तकर्पूरकरम्भा रजतं हविः ।
हिम्मौकभस्महिण्डीरचन्दनं करका हिमम् ॥
हारोर्णनाभतन्त्वस्थि स्वर्गङ्गा भवदाभ्रकम् ।
कैलासकाशकार्पासहासवासरकुञ्जराः ॥
नारदः पारदः कुन्दः खटिका स्फटिकादयः ।
कृष्णानि केशवः सौरी चीरचन्द्राङ्कराहवः ॥
विन्ध्याञ्जनाद्रि वृक्षा हि वनसैरवराक्षसाः ।
शिवकण्ठवनद्वैपायनरामधनञ्जयाः ॥
शनिः द्रुपदजा काली कलिकोलयभासुराः ।
केशकज्जलकस्तूरी राजपट्टविदूरजम् ॥
विषकोषकुहुः शस्त्रागुरुपापतमो निशाः ।
मसी पङ्कमदाम्भोधि यमुना धूमकोकिलाः ॥
गोलाङ्गूलास्य गुञ्जास्य कण्ठः खञ्जनकोकिलाः ।
गरलं तालतापिञ्छतिलेन्दीवरवल्लयः ॥
रसावङ्गूतशृङ्गारी कटाक्षोऽलिः कनीनिका ।
नीली जम्बुफलं मुस्ता काकतुल्या कुकीर्त्तयः ॥
भिन्नच्छाया गजाङ्गार खलान्तःकरणादयः ।
नीलालि शुकशैवालदूर्वावालतृणं बुधः ।
वंशाङ्कुरो मरकतेन्द्रनीलार्कद्वयादयः ।
शोनानि भौम-तीक्ष्णांशु-ताम्र-कुङ्कुम-तक्षकाः ॥
गुञ्जेन्द्रगोप-खद्योत-विद्युत्-कुञ्जरबिन्दवः ।
हिङ्गूल-कुक्कुटशिखा-तेजः-सारसमस्तकम् ॥
माणिक्यं हंसचञ्चू शुकमर्कटयोर्मुखम् ।

चकोर-कोकिल-पारावतनेत्र-नखाग्नयः।
कुसुम्भकिंशुकाशोकजवाबन्धूकपाटलाः॥
कमलं दाडिमीपुष्पं विम्बं किम्पाकपल्लवौ।
ताम्बूलरागो मञ्जिष्ठालक्तकं रक्तचन्दनम्।
त्रेता नखक्षत क्षत्रधर्मं रौद्ररसादयः॥
पीतानि ब्रह्म जीवेन्द्र गरुड़ेश्वरदृग्जटाः।
गौरी द्वापर गोमूत्र मधु वीररसो रजः।
हरिद्रा रोचना वीतिगन्धके दीपचम्पके।
किञ्जल्कवल्ककेशालि हरितालो मनःशिला।
कर्णिकारं चक्रवाकवलयोः शारिकामुखम्॥
केशरांशुकमण्डूक सरागकनकादयः॥
धूसराणि रजो लूता करभो गृहगोधिका।
कपोतमूषिकौ रङ्काककण्ठ खरादयः॥

उपमेयस्य शोभातिशयख्यापनाय कयापि युक्त्या विशेषणैरलङ्कृतमुपमानं कुर्वीत। यथा—

सुरनिकरकराग्रव्यग्रमन्थानशैल-
क्षुभिततरलदुग्धाम्भोधिकल्लोलकान्तिः।
हिमकिरणमरीचिव्यूहविभ्राजमानः
क्षितिधरपतिचूडाजाह्नवीफेनकान्तिः॥
तुहिनगिरितनूजानम्रभूतेशचूडा-
-गलितगगनगङ्गाधौतशीतांशुगौरः।
गिरिशमुकुटचन्द्रज्योतिरुद्योतमान-
स्फटिकशिखरिशृङ्गस्पर्द्धमानाङ्गकान्तिः॥ इति श्वेतम्।
मुकुटगलितगङ्गानीरकल्लोलमाला-
स्नपितगिरिशकण्ठस्पष्टरुग्देहयष्टिः।
अभिनवजलवाहव्यूहधारासिशुद्धा-

स्तनशिखरिगरीयःशृङ्गतुङ्गाङ्गलक्ष्मीः॥
दिनपरिवृढ़पुत्रीगर्भनीलारविन्द-
भ्रमरमधुपालीपद्धतिप्रख्यलक्ष्मीः।
जलशयनशरीरं माररोचिः प्रपञ्च-
स्फुरितसरिदधीशभ्राजमानाङ्गयष्टिः॥ इति कृष्णम्।
मसृणघुसृणपङ्काभ्यङ्गसक्तमृगाक्षी-
कुचकलशपिधानो कामकौसुम्भकान्तिः।
तरुणतरणिकान्तिव्रातसंसर्गरङ्गत्-
कमलदलनिकायप्रायकासप्रभोर्म्मिः॥
अभिनवरविरश्मिद्योतितप्राच्यभूभृ-
च्छिखरलसदशोकस्मेरपुष्पोपमानः।
परिकुपितमृगाक्षीलोचनप्रान्तरोचि-
स्फुरितकमलकर्णोत्तंससङ्काशकान्तिः॥ इति रक्तम्।
मधुरिपुपदनिर्यज्जाह्नवीवारिपूर-
स्नपितगरुड़पत्रप्रख्यसंलक्ष्यकान्तिः।
तरुणकिरणमालीस्फुर्जदंशुप्रवाह-
स्नितकनकसरोजव्यूहतुल्याङ्गकान्तिः॥
जलधरणिकुरम्बोद्दामधारानिपात-
स्नपितकनकशैलस्पर्द्धिवर्द्धिष्णुकान्तिः।
तरुणतरमृगाक्षीगण्डरोचिःप्रपञ्च-
स्फुरितकनककर्णोत्तंससङ्काशलक्ष्मीः॥ इति पीतम्।

इत्यादि सदृशं सदृशेनोपमेयं यथा—

भ्रमरनिकरयाच्ञाप्रस्फुरत्कामधेनु-
स्तनगलितपयोवद्भारती भाति यस्य।
हिमकिरणमयूखव्रातभिन्नेन्दुकान्त-
प्रसरदमृततुल्या यस्य वाचो विभान्ति॥

दनुतनुजविपक्षक्षुब्धदुग्धाब्धिगर्भो-
ल्लसदमृतसमाना रेजिरे यस्य वाचः।
मदनदमनचूडाचन्द्ररोचिष्णुगङ्गा-
लहरिभरसनाभिः शोभते यस्य वाणिः॥
इति द्वितीये श्लेषस्तवके वर्ण्यं नाम द्वितीयं कुसुमम्।

अथ प्रकीर्णम्।

सम्पूर्णगर्भवृत्तानि मुखपद्मेन्दुदर्पणाः।
चक्रारघट्टतिलकस्फटिकपुटशाणकाः॥
आवर्त्तः कमठो लूताग्रहं छत्रमपूपकम्।
आलवाल महीजाल चर्मकं स्थालकादयः॥
वृत्तानि राहुनारङ्गस्कन्धधम्मिल्लमोदकाः।
रथाङ्गलावककुत्कुम्भिकुम्भाण्डकादयः॥
कर्णपाशभुजापाशाकृष्टचापघनाघनम्।
मुद्रिका परिखा योगपट्ट हार स्रगादयः॥
त्रिकोणानि हलेशाचिकामार्चि वह्निमण्डलाः।
सव्यचराद्यदम्भोलि शृङ्गाटशकटादयः॥
वक्राण्यलकभालभ्रूनखाङ्काङ्कुशकुञ्चिकाः।
भग्नकङ्कणवाणेन्दुदात्रकुद्दालचन्द्रकाः॥
शुकास्यं किंशुकं विद्युत् कटाक्षेन्द्रधनुः फणाः।
पुरोधः करकोलेभदन्तसिंहनखादयः॥

गुणतो वर्ण्याणि।

तीक्ष्णानि प्रतिभा हीर कटाक्षा दुर्वचो नखाः।
गुरूणि सज्जनः श्रोणिकवाटस्तनवृद्धयः॥
सुखदानि शशी गीतपुष्पलक्ष्मीः सुतोद्भवाः।
नष्टानि सुस्पृहालब्धि वियुक्तप्रियसङ्गमाः॥
दाढ स्वातन्त्र्यसम्मित्र विद्यासन्तोषसूक्तयः।

दुःखानि पारतन्त्र्याधिव्याधिमानच्युतिद्विषः॥
कुभार्य्याश्लेषकुग्रामवासकुस्वामिसेवनम्।
कन्याबहुत्वं वृद्धत्वं निवासः परवेश्मनि॥
वर्षप्रवासो दुर्भार्य्यो कुभृत्योऽर्द्धहलं कृषौ॥
स्थिराण्याजौ भटः साध्वी धर्माधर्मौ सतां मनः॥
अस्थिराण्यबला दोलापाङ्गयौवनदुर्जराः।
स्वामि प्रसादेभकर्णस्वप्नमत्स्यकपिश्रियः॥
मन्दगानि शनि ज्ञानि वृष हंस गज स्त्रियः॥
क्रूरस्वराः काकवृकवराहोष्ट्राश्वगर्दभाः॥
वलिष्ठान्यनिलो विष्णुर्गरुडो हनुमान् यमः।
महावराहः शरभः सत्प्रतिज्ञा गजः पृथुः॥
हली वाली वलिर्भीमः सती शेषः पुरा कृतम्।
सुरूपा नकुलेनाश्विनलकूवरमन्मथाः॥
उष्णानि स्मरतापाधि प्रतापा दुर्वचस्तपः।
मधुराणि विदग्धोक्ति प्रियाधर शशित्विषः॥

आरोप्यगुणाः।

औदार्य्यधैर्य्यगाम्भीर्य्यशौर्य्यसौन्दर्य्यशक्तयः।
माधुर्य्यैश्वर्य्यचातुर्य्यमर्य्यादाक्रौर्य्यकीर्त्तयः॥
तेजस्तारुण्यषाड्गुण्यसौलक्षण्यरणाशताः।
ब्रह्मण्यदानदाक्षिण्यशीलशौचसुवेशता॥
सत्यौन्नत्यकलाबन्धुमान्यभक्तिकृतज्ञताः।
दृढ़प्रतिज्ञता प्रज्ञा श्रद्धा मेधोद्यमः क्षमा॥
दयानयार्जवाचारसन्तोषमितभाषिताः।
विद्याविवेकविनयारोग्यसौभाग्यवक्तृताः॥
उत्साहित्वकुलीनत्वनिर्दोषत्व मटेच्छताः।
स्वावाधित्वोपकारित्वाभयास्तिक्याविशङ्कताः॥

प्रसादप्रीतिभीधैर्याधिगमत्व सहायताः।
श्रीमाहात्म्य महारम्भ निर्दम्भश्लाघ्यभीषताः॥
बहुश्रुतत्वसौजन्यपरिच्छेदाप्रमादिताः।
जितेन्द्रियत्वागर्वत्व स्वधर्मकथनादयः॥

अथ सर्वाङ्गकथनम्।

प्रपादाङ्घ्रि गुल्फपार्ष्णिजङ्घाजानूरुवङ्क्षणम्।
कटित्रिकनितम्बस्फिक्वस्त्यु पस्थकक्कुन्दरम्।
जघनं जठरं नाभिवलिवक्षोजचूचुकम्।
क्रोड़ोरो जत्रुपृष्ठांस कक्षा दोः पार्श्वमध्यमम्॥
प्रगण्डः कूर्परो हस्तः प्रकोष्ठो मणिबन्धनम्।
अङ्गुल्यङ्गुष्ठ करभ नखपर्व चपेटकम्॥
कण्ठः शिरोधरा श्मश्रु मुखौष्ठ चिवुकं हनुः।
सृक्क तालू रदा जिह्वा नाशा भ्रू गण्ड लोचनम्॥
अपाङ्गतारकाकर्णभालमस्तकमूर्द्धजाः।
यथासम्भवमेतेषु वर्ण्यं स्त्रीपुंसयोर्बुधैः॥

पादाग्रादि।

यथा—विप्रपदमनोहरो विष्णुवक्षःस्थलवत्। द्विपादरचितस्थितिर्नृपवत्। सदाचरणस्थितिं विभ्रद्भूमिवत्। गूढ़पादग्रन्थिर्मन्दराकर्षणरज्जुवत्। शुद्धपार्ष्णिर्विजिगीषुवत्। जङ्घालसत्कान्तिश्चन्द्रवत्। सज्जानुगतवैभवो धनिकवत्। रम्भोरुकान्तिः कन्दर्पवत्। सुवङ्क्षणेन हर्षयन् गणेशवत्। कटिकान्तिस्थितिं विभ्रन्नृपवत्। सत्रिकामोदितो यज्ञपुरुषवत्। सदामनितो वालङ्कृतो नन्दकुमारवत्। नवस्तिमितकान्तिराषाढ़ान्तरस्यभूभागवत्। सुधीरोपस्थानमोदितोऽर्जुनवत्। नवकक्कुन्दरचितशोभः शिशिरवत्। सर्वदारोरुपेशलः सुभगवत्। सज्जघनो वर्षाकालवत्। सदापि चण्डसंरम्भो नृपतिवत्। नाभिभूत-

स्थितिं वहन् मनस्विवत्। घृतबलिशोभितः कैवर्त्तवत्। द्विपयोधरसाटोपो नृपवत्। कुचेष्टाभोगभासुरोऽधमवत्। मञ्जुलकुचाग्रविभ्रद्वनवत्। उच्चैरङ्कसमन्वितो दुष्कालवत्। स्पष्टमुत्सङ्गपेशलः प्रातश्चक्रवत्। रम्यरोमान्वितो भल्लूकवत्। सदादीर्घपृष्ठविराजितः पातालवत्। स्वमांसरुचिः सिंहवत्। नवकक्षान्तः श्येनवत्। विभुजातिमनोरमो नृपवत्। सुपार्श्वभूषितो रावणवत्। विलसन्मध्यमः स्वरसमूहवत्। अधिकप्रगण्डभूषितोऽरण्यवत्। उल्लसत्कफोणिमाधारो जरारोगिवत्। प्रहस्तस्थितिपेशलो रावणसैन्यवत्। करभान्वितो बिन्ध्यपरिसरवत्। विप्रकोष्ठस्थितिः प्रणववत्। लसन्मणिवन्धभासुरो मुकुटवत्। निजाङ्गुलिकान्तः कालसर्पवत्। स्फुरत्करभो गजाननवत्। नखरस्थितिभासुरः शिशिरार्कवत्। सुपर्वभूषितो मेरुवत्। उच्चपेटकस्थितिस्ताम्बूलिकपर्णवत्। अधिकण्ठमनोहरो मन्त्रवत्। गलच्छायासुन्दरः कृष्णपक्षेन्दुवत्। उल्लसितशिरोधरान्वितो वनवत्। सुग्रीवोदितवैभवो रामवत्। अधिकधरान्वितो नृपवत्। सदाश्मश्रुतः कान्तः पर्वतवत्। अधिकानलरोचिष्णुर्गिरिवत्। मधुराधरः कृष्णबाहुवत्। स्फुरन्महादंष्ट्रिकान्तः पल्वलवत्। मुखरोचितवैभवः कथकवत्। पृथुलास्यमनोहरो नर्त्तकवत्। बहुधा वदनस्थितिः सैन्यवत्। हनुमद्विभवान्वितो रामवत्। महास्कन्धायशोभितो नृसिंहनखाश्रवत्। सुसम्पन्नसुतालुनो रेणुकाशिरोवत्। रसज्ञानर्द्धिसमुत्साहो धातुवादिवत्। कलयन्नासिकास्थितिं पान्थवत्। नवभ्रूचितः शिशुपालवत्। सदालोचनभासुरो सन्त्रिवत्। सुदर्शनमनोहरो विष्णुवत्। स्पष्टां वक्रस्थितिं बिभ्रत् सरोवरवत्। सदीक्षणालङ्कृतश्रुतिमार्गो यजमानवत्। कलापाङ्गमनोहरो मयूरवत्। उल्लासिता-

वासो वसन्तवत्। अधिकर्णस्थिति बिभ्रत् दरिद्रवत्। वहन् वैश्रवणस्थितिं कैलासवत्। उच्चैःश्रवःस्थितिं बिभ्रदिन्द्रवत्। प्रतिभाभासितस्थितिं बिभ्रत् कविवत्। अलिकान्तद्युतिं बिभ्रत् पद्मवत्। स्फुरत्पृथुललाटश्रीर्भृगुकच्छवत्। उत्तमाङ्गस्थितिं बिभ्रत् कन्दर्पवत्। सदाबालमनोहरो ब्रह्मवत्। बहुकुन्तलसद्युतिः सुभटवत्। अधिकेशश्रियं बिभ्रन् नन्दिवत्। कचरोचितः समुद्रवत्।

देहवर्णनम् यथा—काले वरस्थितिं बिभ्रत् कुमारीवत्। सुसम्पन्नवपूरस्यो नृपवत्। साक्षादधिकविग्रहो दैत्यवत्। उच्चैरङ्गमनोहरो नन्दनवत्। अधिकायस्थितिं बिभ्रत् कृपाणवत्।

अथोपमा। विष्णुरिवाहीनभोगसङ्गतशरीरो विपन्नाशनः सुदर्शनान्वितः। शिव इव परमहसितश्रीः सुशोभनगरस्थितिः महासेनानुयातो विष्वक्सेनोल्लासितविग्रहः। समुद्र इव समानघनरसभासितो बहुलवारणो नदीनदेशः सुधामाश्रयश्च। सत्यलोक इव हिरण्यगर्भश्रीः। सोमेश्वर इव प्रभासङ्गतः। रविरिव महोदयान्वितः। अनिरुद्ध इव सदोषारुचिः। उद्धृतसारसागर इव पारिजातः। रोहण इव सुरुचिरमणी रमणीयः। चन्द्र इव वलक्षामोदितश्रीः। प्रावृषेण्यहंससङ्घ इव समानसङ्गतः। श्रोत्रिय इव सदाचारप्रियः। देव इवातिसम्पन्नवसुधाभोगी। प्रावृट्काल इव सुखद्योतः। तूणीर इव सदारोचितः। वैद्य इव स्वस्थामोदितश्रीः। वणिगिव उपायनवशलक्ष्मीः। सुराष्ट्र इवाधिकङ्गैरचितस्थितिः। भृङ्ग इव प्रियङ्गैरचिताटोपं बिभ्रत्। तरुणीगण इव पुरोगौरसाटोपश्रीः। कामिनीकेशपाश इव सदाक्षरसमधुरः। दीक्षित इव सुराज्यघटनादक्षः। दशरथ इवाभिरामोल्लसितश्रीः।

अथ वनवर्णनम्। नृपसैन्यमिव सदाफलकसल्लक्ष्मीकं

सज्जं वीरगणं बिभ्राणम्। विष्णुवक्षःस्थलमिव पुन्नागकृत-मालालङ्कृतम्। रुद्रभालस्थलमिव स्फुरितामलकीलाघा-नलम्। कामशरीरमिव सर्वदा रूपशोभितम्। चन्द्रबिम्बमिव विशाखानुगतम्। समुद्रमिव विद्रुमशोभितम्। रामसैन्य-मिव सज्जपावनवैभवम्। रविमिव तापिञ्छविराजितम्। नेपालमिव विराजिताम्रश्रियम्। क्षेत्रमिव बहुधान्यपुष्ट-श्रियान्वितं वनम्।

अथ नगरादि वर्णनम्। हिमवन्तमिव सदा गजाति-मनोहरम्। शृङ्गाटोपचितं बहुशो भवनान्वितं नगरम्। अथ वृषभः। नारीव शृङ्गारोपचितस्थितिः। सर्प इव सद्-विषाणश्रियं बिभ्रत्। लोह इव सदात्तपुच्छविराजी। अथ पक्षी। नृप इव विपक्षोपचितवैभवः। रण इव स्फुरद्-विपक्षस्थितिः। तड़ाग इव शतपत्रविराजितः। अथ मेघः। पद्म इव सदामोदरसोदयः। शरत्काल इव उच्चकैरवभूषितः। अथ चन्द्रः। गिरिरिव कन्दरचितशोभः। प्रावृट्काल इव सदावशमुपागतः। रावण इव सकलङ्काभोगः। रविरिव सुधा-मोदितश्रीः। अथ कामुकः। स्थाणुरिवापत्रपः। गज इव परम-हेलाविलासी। स्वर्ग इव सुरतरुश्रियं बिभ्राणः। अथ दुर्जनः। भृङ्ग इवाधिकमहोल्लासी। कुहूचन्द्र इव सूर्य्यसङ्गतः। अथ समुद्रः। तारागण इव तिमिरोचितः। वियोगीव विस्तारि-तापः। अथ गौः। रसवतीव समांसमीना। अथ गजः। हरिरिव पद्माकरसमुत्थितः। स्वर्ग इव सदानवारिः। अथ वराहः। गणेश इव परमोदकरुचिः। अथ वणिक्। जैननय इव बहुलक्षणः। अथ कामिनीजनः। नागर इव कलहाव-लोकितस्थितिः। अथ तार्किकः। शुक्र इव सदनुमानः। अथ वाजी। निर्व्यापार इव पृथुलक्षणः। अथ कवाटम्।

कविरिव बहुलोहंम् निशीथ इव प्रवर्त्तितमोवाहिनी। अथ रावणः। भूमण्डल इव गिरिशतश्रियं बिभ्राणः। अथ प्रावृट्कालः। विष्णुरिव संदारमानवप्रीतिकृत्। अथ गिरिः। महाकविश्लोक इव सरसोपचितपादः। अथ परिव्राट्। वर्षोपल इव सलरक्षयान्वितः।

खण्डश्लेषाः।

अथ शब्दैरपूर्वाद्यैः पूर्वभागप्रयोजितैः।
श्लेषाय शब्दमध्येषु निक्षिपेदक्षरं यथा॥

अपूर्वसूरचेष्टः। आचितखेटकशोभी। उद्योतितपरागशोभः। अञ्चितगजयुतः। खचितद्योतयुक्तः। घनवर्द्धिस्मरः। छविराजितगलः। आमोदितवनश्रीः। धरोचितबलः। न व्याप्तरत्ननाथः। परोचितवनशोभी। प्रमोदितकटस्थितिः। बलोचितहलश्रीः। वामोदितमनस्थितिः। विक्रान्ततरोपेतः। विभूषितपदान्वितः। वियुक्तजनप्रियः। व्यासपक्षहारी। भावोचितरतश्रीः। रचितमणिभासुरः। सततरसस्थितिः। स्थानोदितवरश्रीः। क्षमोदितपणस्थितिः। संयुक्तगवस्थितिः। सम्प्राप्तसारभूषणः। सन्दूषिताशययुक्तः। सम्भावितमदोदयः। कलोपयुक्तकपोतवान्। प्रस्खलितप्रबालोपेतः। प्रभ्रष्टप्रमोदोदयः। वियुक्तविरहस्थितिः। मानोपयुक्तमानवधनः। मारहितमाध्वोल्लासितः। नरहितनगरालङ्कारः। सुरहितसुधर्माश्रयः।

रचितश्लेषसंश्लेषैर्वर्ण्यवर्णादिनामभिः।
उपमानकृतोल्लासैः साधयेत् सर्ववर्णनम्॥

अहो गौरवसल्लक्ष्मीर्यामिनीकामिनीपतिः।
सुपर्वपर्वतौपम्यभङ्गीमङ्गीकरोत्यसौ॥
गौरीभूतकलाशाली परशुभ्रामितोदयः।
सुपीवरसितोल्लासः स्पष्टां श्वेतश्रियं वहन्॥

सदावलाकासितश्रीर्गिरिशाचलसच्छविः।
स्फुरच्चन्द्रकसन्नद्धश्रीर्घनसारद्युतिं वहन्॥
सदानवसुधाशोभाविभ्राणो राजतश्रियम्।
जातरूपचयच्छायो मधुपीतप्रभान्वितः॥
कर्णिकारसितच्छायः परागश्रीविराजितः।
अधिकारण्यसंशोभी नवेन महसा युतः॥
बहुलो हितसम्पत्तिः प्रवालद्युतिपेशलः।
अधिकहुश्रियं बिभ्रत् कलारचितवैभवम्॥
नवधूसरसाटोपः सदा सरलसद्रुचिः।
विभात्यधिकपोलश्रीरासभासितवैभवः॥
असितत्वमनोहारी बहुश्यामलतान्वितः।
स्वभावलीनसल्लक्ष्मीः सदारामोदितद्युतिः॥
केशवामोदितच्छायो न दीनश्रीमनोहरः।
अन्धकारातिरोचिष्णुर्बिभ्रत् कुवलयस्थितिम्॥
स्वर्गः। स्वर्जनस्थितिरोचिष्णुः स्वर्गलाभकरस्थितिः।
मदादिविहितोल्लासः सुरावासनयान्वितः॥
व्योम। सव्योमासङ्गविद्योति सन्नभोगमनस्थिति।
अभ्रान्तस्थिति रोचिष्णु सदाकाशकरस्थिति॥
भूमिः। स्वयम्भुस्थितिविभ्राजी सम्पन्नवसुधास्थितिः।
स्फुरद्धराङ्गसंशोभी सुक्ष्मासमलङ्कृतः॥
पातालम्। सदा बलिसमुल्लासी सज्जपातालवैभवः।
अहीनभोगविभ्राजी भूदारस्थितिसुन्दरः॥
वनादिः। सश्रीकाननरोचिष्णुः कान्तारचितवैभवः।
अधिकासारसारश्रीर्विधुनीत श्रियं वहन्॥
मेघः। स्वर्गस्थितिमनोहारी सदानीरोचितस्थितिः।
सज्जलक्षणविद्योती सदभ्रस्थितिपेशलः॥

गृहाधारः। सम्पन्नवेश्मनि स्थायी सदनस्थितिभासुरः।
सद्मनः स्थितिमुद्बिभ्रत् सुशोभनिलयस्थितिः॥
जलाधारः। अहो वामनसाटोपः सदा खर्वतमस्थितिः।
अधिकं प्रांशुसंशोभी सर्वदा बालसंस्थितिः॥
स्थिरादिः। अचलस्थितिविभ्राजी सदास्थिरचितस्थितिः।
सत्वरोचितलक्ष्मीको मनोज्ञवशलक्षणः॥
समीपम्। उपकण्ठस्थितिं बिभ्रत् सनीडस्थितिपेशलम्।
अभ्यर्णस्थितिविभ्राजि गङ्गाम्बुनिकटस्थिति॥
वैपरीत्यम्। परमश्लाघी विशदच्छायः स्वपलच्छायोऽक्षयप्रतिभः।
अपिनद्धाङ्गः कान्तोऽङ्केन प्रखरोऽत्यन्तं च्चितिमापन्नः॥
इति श्लेषस्तवके प्रकीर्णं नाम तृतीयं कुसुमम्।

अथ संख्या।

एक—मात्मेन्दुहस्त्यश्वगजास्यरद-शुक्रदृक्॥
द्वयं—पक्ष-नदीकूलासिधारा रामनन्दनाः॥
त्रयं—कालाग्नि-भुवन-गङ्गामार्गशदृक् गुणाः।
ग्रीवालेखा कालिदासकाव्यं शूलशिखावलिः॥
सन्ध्या पुरःपुष्कराणि रामविष्णुज्वराङ्घ्रयः।
चत्वारि—वेद ब्रह्मास्य वर्णाब्धि हरिबाहवः॥
स्वर्दन्तिदन्तसेनाङ्गोपाययामयुगाश्रमाः।
पञ्च—पाण्डवरुद्रास्येन्द्रियस्वर्गद्रुताम्नयः॥
महापाप-महाभूत-महाकाव्य-महामखाः।
पुराणलक्षणान्यङ्गानिलवर्गेन्द्रियार्थकाः॥
षड्—वक्त्रकोण-शिशिरो-नेत्र-तर्काङ्ग-दर्शनम्।
चक्रवर्त्ति महासेन वदनर्त्तु गुणा रसाः॥
सप्त—पाताल भुवन मुनि द्वीपार्क वाजिनः।
धाराग्निपूरराज्याङ्ग व्रीहि-वह्नि-शिखाद्रयः॥

अथ रूढ़ियौगिकमिश्राः।

रूढ़यौगिकमिश्राख्यास्त्रिधा शब्दाः प्रकीर्त्तिताः।
व्युत्पत्तिवर्जिता रूढ़ाः शब्दा आखण्डलादयः॥
योगो गुणेन क्रियया सम्बन्धेन कृतोऽन्वयः।
गुणः स्यान्नीलपीतादिर्नीलकण्ठादयस्ततः॥
संख्या अपि गुणा एव वैशेषिकमते ततः॥
पञ्चेषु षन्मुख दशग्रीवैकदशनादयः।
कविरूढ़िच्युताः शुभ्रवपुः षट्कन्धरादयः।
क्रियाकरौ विप्रमुखास्ततः स्रष्टृहरादयः॥
स्वाम्ये भूपति भूपाल धनसन्वर्थकादिभिः।
सम्बन्धे स्वामिनो नाम कविरूढ्या निगद्यते॥
भूनेता भूपतिर्भूभुक्भूपालो भूधनोऽंशुमान्।
कविरूढ्यैव नत्वेवं भूमानं शुण्डगित्यपि॥
जन्या विधातृ कर सू कृत् कर्त्तृ स्रष्टृ सृक् जनक मुखाः।
जनकाद्योनि जन सू सम्भव रुह भूति सूत्याद्याः॥

जन्या यथा। विश्वविधाता विश्वकरः विश्वसूर्विश्वकृत्।
विश्वकर्त्ता विश्वस्रष्टा विश्वसृक् विश्वजनकः॥

कारणाद्यो यथा। आत्मयोनि-रात्मजनिरात्मसूरात्मसम्भव आत्मरुह आत्मभूतिरात्मसूतिः। आदिना वात्स्यायनादयः।

धाय्यात् प्रस्तारोऽन्याङ्कध्वजन्तन्मण्डलसमानाः।
धरभभद्दमानि सस्वर्थशालिशेखरसदृक्षाः॥
यथा शूली तथा सर्पी न शशी हरिणी तथा।
यथेन्दुमौलिर्न तथा गङ्गामौलिस्तु वाचकः॥
भोज्यादन्धःपायिलिटदुग्धपानाशनादयः।
भोज्यभोजकसम्बन्धाद्यथा स्युरमृतान्धसः॥

पत्युः कान्ता दयिता वधू प्रणयिनी प्रियाङ्गनातुल्याः।
पत्न्याः प्रणयिधवाद्याः पतिपत्नीभावसम्बन्धात्॥
सख्युः सखिप्रभृतयो वाह्यघोनासनप्रायाः।
ज्ञातेः स्वसृतनयानुजाग्रजावरजसङ्काशाः॥
आश्रयतः सदनासिध्यासिद्वासिशयप्रकाराश्च।
वध्याद्द्विट्जिदराति द्वेषिभुक्ध्वंसिशासनविपक्षाः॥
अप्यन्तकारिसूदनदर्पच्छिद्दमनदारिमथनाद्याः।
सम्बन्धो हि विवक्षात इति पदादेकतो न संयोज्याः॥
औचित्याद्धि बुधैः प्राक्प्रदर्शिताः सम्बन्धिशब्दास्ते।
वृषस्य सति वाहत्वे शङ्करो वृषवाहनः॥
धार्य्यत्वे तु वृषाङ्कोऽयं सत्वे वृषपतिस्तु सः।
व्यक्तिचिह्नाङ्कितो जातिशब्दोऽपि व्यक्तिवाचकः॥
यथागस्त्यनिवासादि दक्षिणाशा प्रकीर्त्तिता।
शब्दौ त्रिपञ्चसप्तादिवाचकौ विषमार्द्धजौ॥
योज्यौ द्वित्रिनेत्रपञ्चशरसप्तच्छदादिषु।
इतरान्तो नञ्पूर्वो गुणशब्दोऽर्थविरोधिनं व्यक्ति॥

यथा सितेतरोऽसित एव प्रतिपद्यते कृष्णः। जलदादिषु पूर्वपदेषु सरोजमुख्येषु चोत्तरपदेषु सुरपतिसमेषु चोभयपदेषु पर्य्यायपरिवृत्तिः। इति परिवृत्तिसहाये योग्यत्वे यौगिकाः शब्दाः परिवृत्तिसहा एते मिश्रा गीर्वाणैस्तुल्यास्तु।

इति श्लेषस्तवके रूढ़ियौगिकमिश्राख्यं पञ्चमं कुसुमम्।

---

## अथ राजदर्शनम्।

विप्रलापस्तड़ागादिवर्णनं वादितर्जनम्।
एते यत्र निगद्यन्ते क्रमेण कुसुमानि षट्॥

तं वदामि कथाकल्पं सुधाकल्पं समासतः।
अर्थिप्रत्यर्थिनोर्यत्र विभातः सा कथा द्विधा॥
वीतरागकथान्या च विजिगीषुकथा यथा।
वादी च प्रतिवादी च प्राश्निकोऽथ सभापतिः॥
चत्वार्यङ्गानि तुङ्गानि सभायाः सम्प्रचक्षते।
अनिन्द्यः सर्वविद्यासु सर्वालङ्कारपारगः॥
सविता कवितापद्मकानने तर्ककर्कशः।
भवते भारतेऽभिज्ञः प्राज्ञो मन्वादिनाथ वा।
सुवेशो पुरुषो गच्छेत् सभ्यान् सम्भावयन् सभाम्॥
अथ प्रथमतस्तत्र धरणीभरणं प्रति।
विद्वद्वृन्दप्रमोदार्थमाशीराशीनुदीरयेत्॥
स्वस्त्यस्तु विस्तारियशःप्रसस्तिभ्राजिष्णुदोष्णे भवतेऽवते क्ष्मां।
विपक्षलक्षक्षमदक्षतीक्ष्णकौक्षेयकायाक्षतरक्षणाय॥

अतुल्यकल्याणभरलभ्रवाक्! प्राज्यसाम्राज्य! सामादयचतुःसमुद्रमुद्रावच्छेदिनीं मेदिनीं पाहि। प्रतापतापितारातिवर्गो भर्गोपमो भूविनायकोऽवनाय कोविदस्य भवतु भवतः। शारदाशारदाभ्रशुभ्रा विभ्राजतामकुण्ठे भवतः कण्ठे सूर्य्यः सूर्य्यार्चितः। प्रचितोपचयमचिरमारचयतु त्वाम्। अमन्दानन्दचन्द्राय मन्दाकिनी सम्पाद्यताम्। भृङ्गीशभृङ्गारभृङ्गारकारिवारिभासुरापगा गात्रमतिमात्रमत्रभवतो भवतः परिश्रयतु। सर्वतः पर्वतसुतापतिः पातु। गङ्गाशृङ्गारितशिराः शिवः शिवं दिशतु देवाय। सर्वमङ्गला सर्वमङ्गलास्पदास्पदं विदधातु भवन्तम्। प्रभविष्णुर्विष्णुः पुष्णातु जिष्णुतां तव। स दामोदरः सदामोदरतस्त्वयि भवतु। त्वयि करोतु करुणाभरुणानुजध्वजः। मुकुन्दः कुन्दवत् सुन्दरयशस्तारकिताम्बरं विरचयतु त्वाम्। जायतां निजाङ्घ्रिभवभुवने त्रिभुवनं भूषयन्

भगवान् भवदभ्युदयाय। जीव जीवभूरिव भूरिवत्सरशतानि। चिरं विरिञ्चिरिव वञ्चितकाल! कलय पुष्कलमायुः। अरविन्द-नन्दनो मुदं समुदञ्चयतु। निराविलमिलावलयमाहिमालय-मापालय। जय प्रवलरिपुकुलप्रलयकालाग्निरुद्र! अनन्त-गुणमणिगणसमुदय! समुद्रविणगणागणेय! द्रविणतृणीकृत-गीर्वाणवृक्ष! भरत-भगीरथ-सुरथ-दशरथ-रघु-सदृक्ष! विनय-विनमदवनिधवनिवहसुवहचरणचामीकरारविन्द! सहृदय-हृदयक्षीरोदमोदमानगोविन्द! रुद्राणीरमणचरण सम्पन्न! समस्तसामन्तसीमन्तिनी-सीमन्त-सिन्दूर-पूरण-सारण कारण! निष्कृप-कृपाण--धारावलुप्तसमेदिनीपति-मुण्ड-मण्डलीपति-मण्डित-चण्डीशमूर्त्तिमण्डल! वरवदरीवनाचलदलनलीला-खण्डल! अतुल तुलापुरुषप्रमुख-प्रतप्यमानमहादानसन्तान-सन्तोषित--सर्वभूसुपर्वप्रणीताशीर्वादनादप्रमोदमानमानस! यशो-राजहंसोल्लास-लीलानिवास! मानससम्भोत्तम्भितासि-दम्भोलिलीलादलितारिदन्तावलावलीमुक्ताफलोज्ज्वलितराज्य-लक्ष्मी-रमण! दक्षिण! दोर्दण्डहिण्डीरपिण्डपाण्ड-राखण्ड-यशःश्रीखण्ड-मण्डितगजदण्ड! विलसदवनीयक! दारिद्रमुद्राविद्राविद्रविणधाराधर! तृणतर्जितोर्जितधनुर्धर! अङ्ग-वङ्ग-कलिङ्ग-तुलिङ्ग-तैलङ्ग-सगमगध-मलय-मालव-कुरु-स हृणाभीर-सौवीर-काश्मीर-हरिकेलकेरल--कोशलान्तर्वेदिचेदि-महाराष्ट्र--लाट-भोट-चावाट-वराट-करहाट--कर्णाट-गौडचोड-द्रविडानर्त्त-नृत्यत्कीर्त्तिनर्त्तकीनिरूपणनिपुणगीर्वाण-गणस्तूय-मान! दोस्तम्भ-सफल,सकल-समारम्भ! चातुर्य्य-माधुर्य्य-धैर्य्य स्थैर्य्य-सौर्य्य-सौन्दर्य्य-सौकुमार्य्य-मर्य्यादा-दयानयाचारदा-क्षिण्यतात्यक्षामक्षितिपति-गुणग्रामाभिराम। अनवरतसुकृत-कृतानुकृतवत्स! अमन्दमान्दोलदोलायमानोद्दाम! कमला-

विलासवासभवन! भवनगरनाथ! मधुमथनचरणस्मरण-परिणतपुण्यजन्यानन्य-सामान्यवैभवाधिवास! सविकाश-हरहासव्यासोपन्याससङ्काशवाग्विलास-निवासकालिदास! धवलधामाधिरूढ़! समूहस्मृङ्गारप्रौढ़प्रमदामोदामदालसाविल! सन्वयनवाजीराजीवजीवन! भुवनजनमनोमनोहर! मधुकरशृङ्किकेतकीवन! जय सभयजनशबल! जय कमलसमचरण! जय भरणधरणिभरधरण! जय मदनमदहरण! देवं नयनमनोऽभिरामं वाममिव लोचनगोचरीकृत्य कृतकृत्याः प्रशान्तखरदूषणोपप्लवा दण्डकारण्यभुव इव समजनिष्महि। अयं हि सम्प्रति प्रवृत्तो देवस्य साक्षात्कारसंसारमरुसञ्चारसम्भूतप्रभूतखेदानां तापत्रयातपतप्तानामस्माकमकस्मादजनि सुधाकादम्बिनीकदम्बसम्बन्धः। अनेन वसुधाशीकरिपरिष्यन्दिनामिवाकाशजलदेन निर्वापितानि सर्वतस्तापतप्तं शरीरमन्तराणि च करणानि। किं किमस्मभ्यं नोपकृतं? कानि कानि सौख्यानि नोपनीतानि? काः काः सम्पदो न सम्भाविताः? केषां केषां कन्याना न भाजनीकृताः? किमनल्पजल्पकल्पनया? निःशेषमहोदयानामतिभूमिमध्यास्महे। देवः प्रार्थकसार्थकं प्रति प्रतिनिधिः। देवं देवेन्द्रचन्द्ररुद्रोपेन्द्रद्रुहिणमुद्राधरं सत्याश्रय नासत्याः श्रयन्ते। देवेन पवित्रचरित्राणि मित्राणि पुरस्कृतानि। देवाय सेवायतयत्नं द्वाःस्थदुस्थीकृतं सामन्तसहस्रमजस्रं स्पृहयति। देवाद्देवाधिपादिव त्रस्ताः समस्तावनिभृतो विभृतोपक्रममपाक्रामन्। देवस्य निर्दोषः कोषः पोषयतु मनीषिमनीषितम्। देवे च प्रसादसुमुखे संमुखीसम्पन्ना मेमुषी। अपिच। देवस्य महीमहेन्द्रस्यापि सुरसद्मपद्मेव भ्रान्तस्थितेर्बहुलनयनलाभस्य सहजन्यायालोचनमनो-

हारिणः करसम्भृतशतकोटेरस्मतभुजः सन्तानमालभारिणः कनकाचलरुचेरुचामरराजिविराजितस्य स्वयम्भूमहितस्थितेः काञ्चनशोभां दधानाः सुधर्मासभासभासदः सुसमःकाव्यमनोज्ञं चरित्रं सखाप्रवरः प्रणयिनः सुखलीलागन्धर्वांगुरुन्चत्तिरम्भासम्भावितं सदानन्दनसुद्यानम्। अहो वैचित्र्यमत्र जनपदाः सदानयज्ञानीतयश्च। उपचितव्रीहयो विग्रहामहार्णा इवान्योदयोल्लासिनः। बहुखलाः सज्जनालङ्कृताः। लब्धसन्निधाना वैदूर्य्यभाजः। नितान्तप्रणता उच्चताभाजः। कुलीनाः सदानभोगाः। मन्त्रिणः सदाचाराः। मातङ्गाः स्पृहनीयदानाः। भुजगवलया दक्षमखयुषः। भूतिभृतो रजोरहिताः। सुकेशानिष्क्लेशाम्। परिजनः कलानिधिर्न दोषाकरः। दानं ससानमससमानम्। किञ्च किञ्चनवचनमुच्यमानमधुनामधुसमानमधुनामधुनावतारः क्षणमवलावतु च। तथा चामी चामीकराचलवदचलाः कलाकलापमण्डिताः पण्डिताखिलविपक्षपक्षाः। क्षामन्तनाममामक चापलं विचारयन्तु च मया निरुच्यमानमुचितमनुचितं वा। यदेते सदसद्विचारचातुरीचतुराश्चतुरानना इव शिवप्रसादासादितमहितमहिमानो मानोन्नतान्तेवासिवासालोचितव्याख्याः। संख्यावद्गणनायां पाणिनीया इव गणनीयाः। सकलदिक्कलसतुलीस्तनकपोलस्थलमण्डलायमानयशः। प्रसरद्दुर्व्यपोहमोहमहान्धकारप्राग्भारसंहारभास्कराः। कलिकलुषकालकूटकवलनकलाकलितनीलकण्ठावताराः। अमन्दमन्दरगिरिपरिक्षुभित-क्षीराब्धि-मध्योच्छलत्कल्लोल विमल शुक्तिमुक्ताकलापालङ्कृतकण्ठनालाः। अनेककलाविलासोपहसितसितकलकलानिधयो निरवद्यविद्यानद्याश्रयपयोराशयः। ससारसारसारस्वतस्वतःप्रकाशभाष-

माणसमानवाग्ब्रह्माणश्चतुरुदधिमेखलाखेलदुच्छृङ्खलकीर्त्तिनर्त्तकीकाः सकलकलाविलासभाजनसभाजना इह विभ्राजन्ते।

इति तृतीयस्तवके राजदर्शनं नाम प्रथमं कुसुमम्।

---

अथ गङ्गास्तुतिः।

देवस्योपासनावासनाशासनासमाकृष्टाः सत्वरा गत्वरा अपि वयं प्रलम्बविलम्बभाजो यदभूमभूमहेन्द्रस्तत्र हेतुमाकलयत। अच्छामद्राक्षामच्छपसण्डितस्य पचेलिमफलास्वादमोदमानजनपदस्य विकसदमलकुसुमसमूहसौरभ्यलुभ्यदलिकुलकलितललितक्रीड़स्याक्रीड़स्य मध्ये चलदलशालतमालतलशिलातलकलितनिस्छद्मपद्मासनं निश्वासनिःस्वनश्वासनाग्रजाग्रन्नेत्रत्रिभागनिःस्यन्दमानसम्मदोदविन्दुपानपीनचकोरचयरचितपरिचयं काषायसिचयं रागारिदारिज्ञानासिचयं निखिलोपनिषन्निषसमानसं परमहंससंसदासजदवतंसदुरतिक्रमव्याधिवाध्यमानजगदगदङ्कारं सश्लिष्टमष्टसिद्धिभिरमन्त्रं मन्त्राणां मित्र मैत्रग्राः कारणं करुणाया मन्दिरं मुदितताया: सपक्षमुपेक्षाया: क्षेत्रं क्षमायाः कोषं सन्तोषस्य शैलं शीलस्य पात्रं पवित्रतायाः सौधं शुद्धबुद्धेराधारं धीरताया गुरुं गुरुतायाः प्रासादं प्रसादस्य निदानं चिदानन्दसम्पदामाश्रय श्रेयसः तपसोऽप्युपासनीय समस्यापि सम्यगवगम्यं योगस्याप्यनुयोगयोग्यं श्रद्धाया अपि श्रद्धेयं अस्पृष्टं दुष्टतया अनवगूढ़ं मूढ़तया निरस्तं नास्तिकतया वञ्चितं कुचिन्तया दूरीकृतं प्रतिग्रहेनावज्ञातमवज्ञानेन नाङ्गीकृतमनङ्गेनाक्षिप्तं दृप्ततयातिसारितं मात्सर्य्येणानिषेवितं विषयैरलब्धं लुब्धतया वर्जितं अनार्जवेन शीलितं दुःशीलतया निर्वासितं दुर्वासनाभिरकलितं कलिना कलिनाम मद्दिलानामिव,

परिहरन्तं महामन्त्रिणं पवनाभ्याससुघटितसन्धिविग्रहं कामनया वर्जितमपि न कामनया वर्जितं निष्कोपचयमपि अनिष्कोपनिचयं स्फुटमहसं अस्फुटमहसं अनुतापकारिणं अननुतापकारिणं गिरा वनप्रियं पुरुषमपुरुषमद्राक्षम लक्ष्मभिरभिमतैरसमानं भासमानम्। अथाभ्युत्थानवेलालोलायितानन्तरं बद्धाञ्जलिर्निरवद्यगद्यपद्यमयीमयमुदाजहार भारतीं। यथा—जह्नुजे! मम शशिप्रभासिते भासिते समुकुटे सदानवे!।

दानवेन्द्ररिपुपादनिर्गते! निर्गतेर्भव भवाब्धिपारदा॥

पारदावदातवीचिनिचयक्षालितास्तोकलोकमनेकमतिशयकमण्डलायमानपानीयधारावधूतनवसुधेव वसुधेश्वरभगीरथपथप्रवर्त्तमानजलकल्लोल-मिलद्दिण्डीरपिण्डविडम्बितहरमनोहरहासे! महासेनजननि! जननरकहारिणि! निखिलदुरितदूरितत्रिभुवनभुवने! भवनेत्रानलकीलकवलितबालेन्दुपालनोचितपयःप्रदानकुशले! कुशलेखाङ्कितसमीपवने! पावनेन्दिरामन्दिरारविन्द-सुन्दरमेदुरापे! दुरापेश्वरशिरः-सञ्चारसञ्जातपरमगौरे! गौरवेशविशेषप्रभाविनिन्दितशारदजलदे! जलदेवतावगाहनक्षुभितसितच्छदनिवहभासमाने! समानेकपदप्रदेशसञ्चारिहरिणगणप्रारब्धकेलिसङ्करे! सङ्कोचिततटनिषण्णमुनिजनाकीर्य्यमाणमनोरमारवे। मारवेदनानभिज्ञवैखानसारचितसारसवने! अवलेह्यमानादिपुरुषवक्षःस्थलशायिकौस्तुभप्रभासमूहसिते! हसितेश्वरशिरोवर्त्तिशीतद्युतिकेतकीकलिके। कलिकेलिभवनभवनगरदाहोद्धुरधर्मानलप्रभवारणे! वारणेन्द्रावगाह्यमानघनरसे! नरसेमुषीसमुदयागोचरित-हरमौलिमालतीमालाभ्रमकरे! मकरेश्वरपृष्ठाधिशयितचरणकिशलये! सलयेन्द्रादिवृन्दारकवृन्दविधीयमानयज्ञे! नयज्ञेश्वरभार्गवाङ्गिरसवाङ्मनसागोचर

प्रभावे! प्रभावेश्वामृतरश्मिमण्डलाप्लवनसुरसे! सुरसेव्य-
मानसैकतसन्निधाने! निधानेश्वरशैलशिरोविहिततरङ्गे!
तरङ्गेरितनीरजोदरकुञ्जगुञ्जद्भ्रमरे! भ्रमरेणुहरणप्रवीणसम्भा-
रसम्भाविते! भावितेश्वरप्रलम्बजटाकलापे! पेशलस्वर्वासि-
विलासिनीघनजघनारूढमुग्धप्रवाहाक्रष्टत्रिपिष्टपविटपिप्रसून-
धवलिते! वलितेजोहारिहरिवामपादप्रहारभिदुरब्रह्माण्ड-
भाण्डमण्डपमध्य--राजतैकस्तम्भायमानमहाप्रवाहशोभितजग-
दीक्षिते। दीक्षितेप्सितलोकप्रदानपटुतटनिविष्टसन्तुष्टनैष्ठिक-
गोष्ठीस्तवाविर्भूतवासवे! वासवेतसनिकुञ्जनिषण्णकिन्नरमि-
थुनोपगीयमाने! गीयमानेकपनदविलासनोद्धुरतरवारि-
धाराधारे! राधारेवतीपतिसमाराधितकलिन्दकन्यापरिरम्भ-
णावाप्तहरिहरकायशोभे! यशोभेशप्रकाशनाशितदुरिता-
न्धकारविसरे! विसरेखायमानहरशिरश्चन्द्रचुम्बनचटुलचक्र-
वाकजलव्यतिकरोद्धृतसगरपार्थिवकुले! वकुलेन्द्रद्रुमादिद्रुम-
च्छायानिशनिषण्ण--कुरङ्ग--कुलकवलीक्रियमाण--तीरकमले!
कलमेखलानिनादानुवादिराजहंससरसितोल्लासितविपुलपुलि-
नजघनके! घनकेतकीवनपवनान्दोलितनीलोत्पलकुन्तले!
कुन्तलेलिहानभीषणसमरार्णवसन्तरणप्रवीणदैतव्रतनिपीतकु-
चकलसे! कलसेवालमञ्जरीग्रामनामसतिमिरनिकरवि-
राजमानप्रवाहभूषितमदनदहनमस्ते! नमस्ते महोर्मि-
जिताहीनभोगे! नभोगेयकीर्त्तिलसद्दिप्रसिद्धे! प्रसिद्धेस्तु
गङ्गे! सुदे! तेऽम्बुधारा सुधाराधिते! दत्तसन्तानभोगे॥
नभोगे खलाशीविषातंकवीशः कवीशस्तवेमं स्तवं व्याततान।
तवानन्तकीर्त्तेः कलाभाजनानांजनानांशिरोदामदेवेश्वरेऽपि॥

इत्यभिधाय विरराम। इति तृतीयस्तवके गङ्गास्तुति-
र्नाम द्वितीयं कुसुमम्।

## अथ भगवत्पादानुभाषणम्।

अथ विहितस्तवस्यास्य भ्रूसञ्ज्ञया पुरुहूताज्ञयैवाहूताः सविनयसुचितोपचितामेतां वाचमवोचामः। नमः कमलाकामुकाकारावतरणेभ्यः श्रीचरणेभ्यः। सम्प्रति प्रसादप्रसादतः संसारगुरुमरुमरीचिकारोचिकां तृषाल्पषापगमभाजः सुधासागरमगाधमध्यमवहिर्वाहनकृतास्मत्संवाहनो ज्ञानदर्पणकृतनिर्यापणः सद्यो याज्ञवल्क्यवाक्यमाशिश्रिये। अधुना धुनाना पापानि सुरधुनीहाध्वनीनतामयासीत्। अतोऽस्माकं न भविता भगवन्! भवन्मुखसुखावलोकनात् उत्सारिता तुच्छकच्छोच्छ्रायनिकायस्य कायस्य फलमविकलमवापाम:। भवानेको भवानेकोपपातकव्रातकरभकुल-निराकुल-कवलन-कठोर-कण्ठीरवो भगदागमनप्रसङ्गो गङ्गाप्रवाह इवाल्प प्रायेण प्रवर्त्तते। युष्मद्विजयव्याजेन राजीवजन्मासन्मार्गोपदेशायास्मै समाजिह्वीतेस्म। उन्निद्रश्चन्द्रो वागत्य धरणीसरणीरमृतसारणीभिरभिषिषेच। किं बहुना भवादृशानां दर्शनमेव दारुणदुरितदारणम्। सम्भाषणमेव निखिलोपनिषन्निषेवणं स्पर्श एव स्पर्शाश्मलाभः शुश्रूषैव ब्रह्मशुश्रूषा सन्निधानमेव सन्निधानं समाराधनमेव समाराधनं तवद्यनिरवद्यं तिथिरतिथिः श्रेयान्मे मुहूर्त्तः समपद्यत। मातापित्रोः पवित्रोऽन्वयः प्रतिष्ठा निष्ठामवाप। नित्यकृत्यानि कृतकृत्यानि नित्याभ्युदयचयभाजो वयं यद्यपि कृपामृतस्पृशा दृशा भृशमङ्कृताः कृतार्थास्तथापि वाचालतावाचालतः काण्डमकाण्डं ताण्डवयति। भगवत्परित्यागादकृशक्लेशः कतमो देशः कृतः? स्वच्छन्दमागच्छद्भिरच्छधीभिः के के वाश्रमागतश्रमागतविश्रमादक्रियन्त। कियतीयती-

स्वराणामजनि जनितः प्रभृति विमला वर्णमाला। अमन्द-वन्द्यपादानां साधुमाधुकरी भिक्षा पीयूषकक्षामनूचानचय-गृहेषु ग्रहिष्यति किमु कथाभाग्यभाजो भवने भवने-पथ्यभूताद्यापि भविष्यत्येकभिक्षा। अन्यच्च। श्रीमतां वेदान्ते वेदान्तेवासिप्रभृतिभिरेव जनो भगवन्महिमानं मीमांसानिःसीमां सम्प्रति प्रतिपद्यामहे महेच्छानाम्। भगवदुप-न्यासाद्विहितकणादानुवादाच्चपादानुवर्त्तिन्यो विद्याः प्रसिद्ध-बौद्धप्रयुक्तकुतर्ककर्कशशरेभ्यो न बिभ्यतीत्यभ्यर्हिताः प्रकाममा-मनन्ति। सङ्ख्ये संख्येयसङ्ख्यावत्सङ्ख्यायां मुख्यतया लिख्यन्ते लेखैरपि युष्मादृशाः। आपातप्राञ्जलपातञ्जलजलधिरञ्जलि-नाकलितः कलितमोहारिभिः। गुणानां साहित्यं साहित्य-सादधाति धातृतुल्यानाम्। तत्तद्रसप्रसवित्वं कवित्वं बिभर्त्ति कीर्त्तिमतामित्यनुशुश्रुम। अतएव युष्माभिरनूषाभिषङ्गैः समं सविस्मयाः समगंस्महीत्यभिहिते विहितयथोचितानुवादे प्रदक्षिणाचरणप्रणामादिना सप्रसादे प्रसादे तदनु तदनु-ज्ञया ततस्तीव्रमनुव्राजिष्म।

इति भगवत्पादानुभाषणं नाम तृतीयं कुसुमम्।

---

अथ विप्रसम्भाषणम्।

अथ दक्षिणेन क्षोणीपतिमार्गं भार्गवमिव परशुभोल्लासित-ममृतसञ्चारमिव कुण्डलसन्नद्धमौकं वशिष्ठमिव शिष्टश्रेष्ठं परा-शरमिव पराशयज्ञं वेदव्यासमिव वेदव्यासोक्तं शुकमिवा-शुकलितपरमार्गं दुर्वाससमिव दुर्वासनाशून्यं जमदग्नि-मिव ज्वमदग्नितेजसं गर्गमिव भर्गभाजं काश्यपमिव वश्य-

धरमैन्द्रियम्, गौतममिव श्रौतमतप्रवर्त्तकम्, विश्वामित्रमिव विश्वासितम्, अत्रिमिव सत्रिप्रवरम्, गुरुमिव क्रतुक्रियाकोविदम्, कुत्समिवाकुत्सचरितम्, वत्समिव वत्सलम्, वालिमिव जीवालिदयालुम्, तरुणायमानकरुणारसनिर्य्यासपीयूषवर्षिभि र्दृगञ्चलैरुदंचयन्तमिव चन्द्रचक्रवालम्। ईषदुन्मिषद्दशनच्छलेन स्वच्छमाशयं प्रकाशयन्तम्, उपमठपठदकुण्ठकण्ठवैकुण्ठभक्तविरक्तप्रव्यक्तोक्तसूक्त संसक्तचेतसम्, ऊर्द्ध्वरेतसम्, अजिह्मम्, ब्रह्मिष्ठं ब्राह्मणं सम्यगुपगम्यैतदवादिष। श्रीमन्नमस्कुर्म्महे महेशमहसामत्रभवतां विहिततीर्थसार्थक सञ्चरणौ चरणौ, भवांश्च चतुराननोऽप्यनष्टश्रुतिः, पुरुषोत्तमोऽपि न मायावल्लभः, गिरिशोऽपि नास्थिरचित्तशोभस्ततो न कस्य नमस्यः? भवतः कलानिधेरनुपाधिरियं चातुरी यच्चतुरचन्द्रकान्ताननं सुरोचितं वचनपीयूषं वर्षतीति निरवद्यालापपद्यामनुसरामः। एकः सातिरेकविवेकः केषां विदुषां परिषदि न गण्यसे? पुण्या धिषणी आसीदस्माकीया दिष्ट्या प्रेक्षावन्तं भवन्तं प्रति सा पूर्णा न किमप्यवेक्ष्यमपेक्ष्यते। यद्यप्यनवद्यविद्याविद्युद्द्योतोद्योतितमेदिनीमण्डलानामविकलां कलयामः कुशलतां कुशलतां दधतां श्रीमतां, तथापि मुदा सदाचारस्वच्छा पृच्छासौ विधीयते। भव्यमव्याहतचित्तानाम्, कच्चिदाचारचातुरीतुलितचिरपुरुषरत्नानामिव नगरी गरीयसी सदावदातभवदवस्थानात्? उत कुतोऽप्यागतं वतंसभूतैर्भूतलस्य? कियन्तः श्रीमतामिहाग्रहारा धराग्रहाराः शालिशालिनः? कश्चिद् विपश्चिद् यजमानो भवन्मानोचितो वर्त्तते? कीर्त्तिमतां प्रतिग्रहं जहति महति यत्ने महितमहिमानो गृह एव निगृहीतेन्द्रियग्रामैरव्ययमवस्थीयते? किंवा क्वापि कदापि

गम्यतेऽनवगम्यतेजोभिः? कस्मिन्नप्यवसरे नरेश्वरावासं प्रति सम्प्रति यात्रा क्रियतेऽन्यत् क्रियते वा? तत्सम्बन्धाः कति? प्रतिदिनं स्नानानि भवन्ति शुभ्भवन्ति? साध्यन्दिनं कर्म निर्ममे निर्ममेहितैर्भोजनमजनि रजनीकरनिकरनिभं शुभयशसाम्, उत विचक्षणानां क्षणादुपरि परिचितिर्भवित्री? भोजनस्य कस्मिन् कस्मिन् वादिगिरिविदारणदारुणकुलिशास्त्रे शास्त्रे मेदुरास्फुरत्यादरोदरोन्निद्रतामरसोदरपत्रसोदरनेत्राणाम्? कापि व्याक्रियते व्याख्या, उत व्याक्रियते किमपि? अत्यहमहं यथा भवदवलोकनादासादयामो दयामोदितमनोभिः सुमनोभिस्तथा विधेयम्। इत्यस्माकमाकर्ण्य कर्णरसायनं वचनं तैरपि कपिलमुनिकल्पैरनल्पजल्पजलधरध्वनिमधुरगम्भीरतारभारती प्रतिशब्दमुखरितमन्दिरोदरमिदमुदीरयामासे। सुचिरमपरिचयवशादसाम्प्रतं साम्प्रतं पौर्वापर्य्यविपर्य्ययाद् यत्किञ्चिदकस्मादस्माभिरभिधीयते, तत्र पवित्रगुणगणे दूषणगणग्रहणग्रहिलैर्न भाव्य भावव्यञ्जितमहितमहिमभिर्महाशयैः। नयनयोरमितमस्तद्रवं स्रवन्तः के भवन्तः? अभिवादये। दयेन्दिरासन्दिरायमाना हृदयारविन्दान् युष्माननूस्मायितान् सस्यगागम्यताम्। नितान्तपवित्रचरित्रैरिहोपविश्यताम्। दृश्यतां दधानैर्गुणनिधानैः सर्वतः शर्मस्वधर्मकर्मनिर्मलमनसां सुमनसाम्। कुतः कुतर्ककर्कशसम्पर्करहितैरिहायातम्? गृहादागम्यते रम्यतेजोभिरुत कुतश्चिद् विपश्चिद् वरेण्यैरन्यतः? अत्रागमनेनायं ग्रामो गुणग्रामोपचितः। कदा विरचितः परिचितकलकल्पैः? किं नाम नामनिकामनिर्मलमतीनाम्? विहितविद्वज्जनवृजिननिर्वासः क्व वासः क्वतः? क्वतत्रैरयं संवसथः कियन्ति वासराणि करणीयः? किं किमधीतं सुधीभिः? किं किं

च पुस्तकमस्ति स्वस्तिमताम्? निर्मितामितखेदच्छेदः को वेदः कोविदैः पठ्यते? का वा शाखा निशाखानुकम्पिनी? को देशः पेशलप्रकृतीनाम्? अदूष्याः पोष्याः कति सन्ति भवतां शुभवताम्? कति भार्य्या आर्य्याणाम्? बहवः पुत्राः, किं द्वित्रा एव देवकल्पाः? कियन्त्यः कन्या विश्वाधिकन्याय-भाजाम्? जनयित्रीजनकौ जनकौतुकदायिचरितौ, किमासाते वा कीर्त्तिशेषपटं निःकपटम्? कियन्ति दिनानि यावदावयोः किमिति दर्शनजनिर्नाजनि अयाचितम्? भृशं बलं शस्वलं किं चास्ति नास्ति वा? कथं निर्वाहो हव्य-वाहोपमतीव्रतेजसां वोभवतीति, भवभीतिजुषां विदुषां नित्यं कर्म हर्म्य एव निर्मीयते निर्मलमनोभिरथवा पुष्कल-पुष्करे पुष्करिणीतटे? एकवारमाहारः सारभूतः प्रभूताज्यः प्राज्यव्यंजनो भवति, द्विर्वा? प्रथमं सन्तर्पितनभोजनं भोजनं कियत्यां वेलायां सम्पाद्यते? अत्र मैत्री धात्री द्विविपदां केन केन समं? समन्ततो विशदपदकदम्बबन्धोपसंस्कृतं संस्कृतं श्रीमता श्रुतमेवास्वच्छन्दममन्दच्छन्दःसन्दानितनितान्त-कान्तकविताकान्तारे गीश्चरति। आत्मकृतिः कृतिचरैः क्वापि पठ्यताम्? अव्यग्रसमग्रगुणग्रामैर्ग्रामान्तरगतमासीत् चमासीमन्तमणिभिः? अथवात्रैवास्थायिस्थायिकीर्त्तिभिः कियन्ति तीर्थानि प्रज्ञाऽवज्ञातगीर्वाणगुरुभिरवेक्षितानि? कियन्ति चातिमात्रपवित्रया यात्रया निर्दम्भैः सम्भावनीयानि? भवतां भक्तिः शीतकिरणाभरणे भङ्गिणमवगणयति किमुत कौस्तुभविभूषणे विभीषणं विशेषयति? सम्प्रति प्रतिभाजुषां जिगमिषैव लक्ष्यतेऽवलक्षयशसाम्। अस्मन्मनीषितमखिलमेव पूर्णमासीत् पौर्णमासीहिमांशुमांसलकीर्त्तिमतां भवतामव-लोकनेन। इति निष्प्रतिममतिभिरभिहिते यथाप्रश्नं लोको-

त्तरैरुत्तरैरनुमोद्याभिवाद्य च वाद्यवेक्षणाकाङ्क्षया निरगामि समगामि च, स्वामिसमीक्षणप्रतिक्षणविजृम्भमाणकल्याणभरैरस्माभिः।

इति तृतीयस्तवके ब्राह्मणसम्भाषणं नाम
चतुर्थं कुसुमम्।

---

अथ तड़ागादि वर्णनम्।

अथ क्वचित् कुवलयावलीमिलितपुण्डरीकखेलव्याजविजृम्भमाणप्रयागपरभागं तड़ागं साकाङ्क्षमीक्षमाणाः क्वापि करकमलकलितजलधौतकलधौतकलशविलासधरपयोधरभरावनम्रनागरीगरीयःखेदच्छेदमेदस्विनीं समीरसमीहितसमीपां वापीं नेत्रपात्रीं कृतवन्तः। क्वापि कूपान् भूपानिव गुणिभ्यः पात्रेभ्यः पावनजीवनदायिनो निरन्तरं निरूपयन्तः, कुतश्चित् पार्वतीपतिपदपयोजपूजनप्रयोजनविशुद्धाभिजननिवासनिर्वासिताशेषकल्मषोपसर्गं दुर्गं नयनमार्गं नयन्तः, अपरत्र च भवद्वक्षस्तटप्रतिभटहाटककपाटरचनासनाथ गोपुरं च परिचिन्वन्तः, अन्यत्र सुपर्वपर्व्वतगर्व्वसर्वंकषान्निभान्निभालयन्तः, इतरत्र जवविजितकुरङ्गांस्तुरङ्गान् रङ्गागतान्नटानिव नृत्यतो निरीक्ष्य वीक्षणयुगलं सफलयन्तः, क्वचिज्जवल्गिवेल्लनोल्लासितभास्वत्तुङ्गतुरङ्गगमनानि नयनमीनयोरानायतां नयन्तः, क्वचन काञ्चन काञ्चनवर्णां कर्णान्तविश्रान्तचारुलोचनां चलां चरणसञ्चरणसिञ्जानमञ्जुमञ्जीरनादेन नेदीयसां हृदयमदयमपहरन्तीमच्छिलच्छीकुर्वाणा निर्वर्ण्य निर्वाणागारलाघवं द्राघयन्तः, वसुमतीसारं देवद्वारं समासाद्य माद्य-

दन्तःकरणाः समवर्त्तिषहि। अनन्तरं निरन्तरमपक्रम-निष्क्रामदनेकसेवकनिकायकायसम्बन्धं सनिबन्धं परितः परिहरन्तः, सन्तमसराशिनाशिप्रचण्डमार्त्तण्डमण्डलसप्रकाशमाकाशसङ्काशं देवसकाशमनायासमयासिष्म। सम्प्रति च न कंप्रति प्रतिभाविभासितवदना वादिन आवर्जिता जर्जरकर्णकलशीकाः प्रेक्षावन्तः प्रतीक्षन्ते चास्मदप्रह्वजिह्वा-शुक्तिमुक्तां वाचो युक्तिमुक्तावलीम्, तदचिरस्य निरस्य सर्वगर्वमेतस्य भगवतीं भारतीं कण्ठपीठाधिष्ठायिनीं निर्माय निर्मायमुपास्य च द्विपास्यमध्यवस्यामि पुराणपुरुषोत्तमस्य देवस्य विचित्रां स्तोत्रावलीम्।

इति तृतीयस्तवके तड़ागादिवर्णनं नाम
पञ्चम कुसुमम्।

---

अथ वादितर्ज्जनम्।

इत्यादि वादिमान्याय वचास्युच्चार्य्य धैर्य्यवान्।
प्रतीक्षेत विपक्षस्य भारतीं प्रातिकूलिनीम्॥
ततः सरम्भसम्भारगम्भीरारम्भनिर्भराम्।
विपक्षं क्षिप्रमाक्षिप्य वाचमुच्चारयेदिमाम्॥
यन्मया सह दुर्बुद्धे! वाग्युद्धं कर्त्तुमिच्छसि।
तत्पङ्गुः शृङ्गमुत्तुङ्गं मेरोरारोढुमिच्छसि॥
सुप्तसिंहसटाकृष्टिसष्टापदपदच्छटाम्।
व्याघ्राय शीघ्रमाघ्रातुं शशकः सत्यमीहसे॥
शुकशावः शशादस्य चञ्चुं चुम्बितुमिच्छसि।
सर्पं सदर्पमङ्घ्रिभ्या निष्पेष्टुं दुष्ट! वाञ्छसि॥
मण्डूकखण्डतां धत्ते कुक्षितो नागसंसदि।
श्रीखण्डखण्ड एरण्डः स्वसौरभ्यं स्तुषे डषे॥

सम्प्रहर्त्तुं विषाणाभ्यां शक्रेभं वृषभेच्छसि।
गिरिं पातयितुं दन्ती दन्ताभ्यामिव वाञ्छसि॥
दुर्बुद्धे! स्पर्द्धसे कीटः प्रकटं कैटभारिणा।
आखुर्विड़ालदशनानुत्पाटयितुमिच्छसि॥
इदं पाषाणदलनमन्धस्यालेख्यदर्शनम्।
मृगतृष्णाम्भसि स्नानं कृष्णाहि-मुखचुम्बनम्॥
तुलया तोलनं मेरोः करेण स्थगनं रवेः।
खड्गधाराग्रसञ्चारः शिरसा गिरिभेदनम्॥
नभसोऽङ्गुलिभिर्मानमयश्चणकचर्वणम्।
अङ्गारशयनस्वापो मज्जयोऽयं त्वयेष्यते॥
राजिलो गरुडं द्वेष्टि खद्योतोऽर्कं जिगीषसि।
कूपः संस्पर्द्धसेऽम्भोधिं मृगः सिंहं जिघांससि॥
खःशाखिमञ्जरीं भूस्थः करेणाक्रष्टुमिच्छसि।
त्वं शेषशेखरमणिं हठेनादातुमिच्छसि॥
स्वर्दन्ति-दन्तैस्ताटङ्कं वतंसं गरुड़च्छदैः।
कृतान्तमहिषीणाम्भोहरणं च चिकीर्षसि॥
त्वया दुर्वचनैरद्य दुर्वासाः परिकोपितः।
कलिकाद्रंष्ट्रया कण्डूरपनेतुमिहेष्यते॥
सुखसुप्तस्त्वया सिंहः पादाघातेन बोधितः।
यदहं वादवचनाटोपेन परिकोपितः॥
लक्षणे मम दक्षत्वं साहित्ये संहता मतिः।
तर्के कर्कशतात्पर्य्यं क्व शास्त्रे नास्ति मे श्रमः?॥
इत्थं सुव्यर्थकैर्वाक्यैरस्य दर्पार्द्धमुद्धरेत्।
अर्द्धं च शमयेद्वादी युक्तियुक्तैर्वचःक्रमैः॥
इति तृतीयस्तवके वादितर्जनं नाम षष्ठं कुसुमम्।

---

अथार्थोत्पादनम् ।

अर्थोत्पादोऽद्भुतं चित्रं सादृश्यं रूपकादिकम् ।
समस्या-पूरणोपायः समस्या च यथाक्रमम् ॥
मृण्मयकार्पासमयद्रुमसम्भवधातुचर्मदृषदां च ।
वाच्या क्लेशसहत्वात् भद्रस्थानादिसम्प्राप्तिः ॥ मृण्मयं यथा—

कुद्दालघात-पादप्रहार-करपीड़न-बन्धनच्छेद-चक्रभ्रमण-पापाणपिण्डिका-काष्ठहस्तघात-रवितापशोष-वह्निप्रवेश-परीक्षार्थंशिरः प्रहारादिभिः कष्टमनुभूतम्; जनबुभुक्षातृष्णापरिहारार्थं जलधारापातेन लोकोपकारः कृतः, तैः सुकृतैः मृण्मयवस्तुनो भव्याधारादिकमारोग्यम् । कार्पाससूत्रमये वस्तुन्येते भावा वाच्याः, यत्पूर्वं शीतवातापयायाचिताम्बुदानकर्मकरनखच्छेदनविक्रिया एवमातपक्षेपलोहोपलघर्षणतुलारोहणान्तःसाराकर्षणपिण्डाघातविदारणयन्त्रारोहणतर्कुभ्रमि आकर्षणतन्तुवायाकर्षणकाष्ठप्रहारविपणिविक्रियादिकष्टमनुभूतम् । तूलिकादिरूपतया परगुह्याच्छादनेन च शीतातपादिवारणतया परोपकारः कृतः, तैः सुकृतैः कार्पासादिमयवस्तुनो भद्रस्थानानि सम्भाव्यम् । एवमन्यत्राऽप्यूह्यम् ।

लज्जा कोपोऽयशो नाशः रोषाक्रन्दास्यकृष्णता ।
रागपाण्डुरता शस्त्री विपक्षस्यातपो जपाः ॥
राजप्रसादहर्षक्यदण्डभक्तिनिषेवणम् ।
दुःखस्नेहाभिचारेर्ष्या सहनोज्जीविकादयः ॥
वर्णने विजितस्यैते पराजयसमुद्भवाः ।
भावा वाच्या यथौचित्यं सर्वे लज्जादयो यथा ॥
मुखेन जितं च कमलं लज्जयेऽवनतं गतम् ।
कोपतरमिव कामारः चुद्रगतस्य शसं भेजे ॥
मूर्त्तमिवायशोऽन्द्रावलिव्याजेन धत्ते ।

अथवा जलदुर्गे नष्टे रोषादिव वारुणतां धत्ते ॥
भ्रमरारवैराक्रन्दतीव नीलालिभिः श्याममुखमासीत्।
मुखेन प्रीत्या सम्भावितं कोकनदमनुरक्तत्वं धत्ते।
चैत्रजितं पुण्डरीकं चिन्तयेव पाण्डुरतां धत्ते॥
भृङ्गश्रेणीमिषादुरसि शस्त्रीं क्षिपति॥
भृङ्गमिषाद्विषं भक्षयति जलान्तस्तपतां दधौ।
जले आकण्ठमग्नं तपस्तनुते। [खेर्मन्त्रं जपति।
परागपाण्डुरां रुद्राक्षमालाभिर्वेलिमालां दधत्तदा
राजप्रसादरहितं बहुकण्टकतां धत्ते॥
हंसैः सह सङ्गतिं कुरुते अरुणदलच्छलेन।
काषायं वासो बिभ्रदवलम्बितैकदण्डमस्ति॥
पल्वलगतमत्स्यकूर्मवराहादीन् भजते।
शम्भोरम्भोमूर्त्तेः सेवां करोति।
दुःखादिव मकरन्दाश्रूणि मुञ्चति।
तन्मित्र इन्दुकान्तिहारिणि सूर्य्ये स्निह्यति।
जलमध्यस्थमभिचारमन्त्राक्षराणीव भृङ्गान् धत्ते।
तन्मित्रे चन्द्रमसीर्ष्यां विभर्त्ति।
भ्रमरपदप्रहरणानि सहते।
त्रासादिवोज्जीविकया भृङ्गनेत्रैरीक्षते।
भयादिव वीचिक्षोभात् कम्पते। [विभर्त्ति।
दृवत्ति स्वपराभवामर्षानलधूमलेखामिवालिमालां
योद्धुकाममिव प्रकाशितकोशं सहस्रं पत्राणि धत्ते।
एवं चन्द्रोऽपि। यथा—
मुखजितश्चन्द्रो लाञ्छनच्छलेन पराभवाकीर्त्तिं धत्ते।
उदरन्यस्तशस्त्र इव लक्ष्यते।
महेश्वरजटाटवीं प्रविश्य क्षमो गङ्गातटे तपस्यति।

विष्णुपदं याचते। तन्मित्रं पद्मं द्वेष्टि।
अस्ताद्रिशिखरमारुह्य समुद्रे झम्पां करोति।
दिवा न प्रकटो भवति। मित्रमनुप्रविशति।
कपोलप्रतिबिम्बच्छलेन तदनुप्रवेशं कुरुते।
विदेशं भजते। उदरताडनादिवच्छामोदरतां बिभर्त्ति।
पाण्डुरः क्षीयते। पीयूषबिन्दुव्याजेनाश्रूणि मुञ्चति।
सदार्द्रतया खिद्यति। अस्ताचले सानुचरो विलीयते।
चरणनखानुबिम्बव्याजेन शरणं प्रविशति॥

इति चतुर्थे स्तवके अर्थोत्पादनं नाम
प्रथमं कुसुमम्।

---

अथ अद्भुतम्।

यत्र लिङ्गविभक्तीनां सति भेदे महत्यपि।
दृश्यते शब्दसादृश्यं तदद्भुतमितीर्य्यते॥
इन्नन्तैः स्त्रीकृतैः शब्दे गौरी क्लीबस्त्रियोः पुनः।
तैरेव रेफपृष्ठस्थैः स्त्रीकर्मबहुता भवेत्॥
प्रभावराजिनी रागोल्लासप्रध्वंसिनी रयात्।
गौरीशशम्भोः पदाब्जे च कुरुतां सुखसम्पदः॥
अत्र गौरी विशेषणे स्त्रियामीन्। पदाब्जविशेषणे नपुंसके औरौ, सुखसम्पद्विशेषणे स्त्रियां शस्।
विशेषणपरिच्छिन्नैर्गिङ्गिते रेफपृष्ठगैः।
द्विष्ठिद्विपञ्चमीकर्मस्त्रीबहुत्वेऽपि चाद्भुतम्॥
द्विष्ठस्योभयपदिधातोःद्विपञ्चमी-परस्मैपदद्विवचने आत्मनेपदैकवचनञ्च तस्याः क्रियायाः कर्मस्त्रीबहुत्वेऽप्यद्भुतम्।

यथा। भवभेदपटूरागध्वान्तभानुस्थितीरयात्।
श्रीमान् विश्वेश्वरो गङ्गाकाश्यौ च कुरुतां श्रियः॥

अत्र विश्वेश्वरगङ्गा काशी श्री विशेषणत्वात्, सु-श्री-शष: क्रमेण कृताः।

स्मेर पुष्कररोचिष्णुराजन्यशतशेखरः।
हरिः खड्गो गणाधीशसूर्य्यौ च कुरुतां श्रियः॥
स्मेर पुष्कररोचिष्णू राजन्यशतशेखरः।
कृपाणस्तव हस्तौ च सदा वितनुतां श्रियः॥
न्युपसर्गशब्दपृष्ठे राजीतुल्यैर्विशेषणच्छिन्नैः।
अन्ते क्रियाविशेषणसारैरत्यद्भुतं भवति॥ ८॥

न्युपसर्गाः, निहत, निमग्न, निरुद्ध, इत्यादिकाः शब्दाः। राजितुल्याः राजि, राजी। धूलि, धूली। इत्यादयः। निकामम्, नितान्तम्, इत्यादि क्रियाविशेषणसारैः। यथा।

छिन्नाघवल्ली निचितात्मसौख्य,
राजी निरुद्धानिरुची निकामम्।
हरस्य मूर्त्तिस्वरणी महांसि,
मा जातु गांतां मम चित्तवृत्तेः॥

तथाच। अदुरितराजी निदलितकर्मश्रेणी निरुद्धराग-भरा मूर्त्तिः क्रमौ वचांसि च शिवस्य लोके सुखं गाताम्।

स्फुरितसुभाषितपालीनिहतप्रत्यूहसंशयं ब्राह्मणाः।
मूर्त्तेः क्रमौ महांसि प्रभवत मुदितं वरं दातुम्॥
प्रचुरप्रभावनहितावच्छितपरमोदया विलासेन।
दातुं प्रभवत मुदितं वरमग्ने! रविविधू! विधिहरीशाः!॥
सुप्रभावा निबद्धोद्यत्पुण्यभावा नियोगतः।
मूर्त्तिः क्रमौ महांसि श्रीहरेर्युगचतुष्टये॥

बह्वाश्रितसरसः सुकविप्रबन्ध इव ग्रीष्मपथाः॥

त्वप्रत्ययान्ता यथा—

सुसम्पन्नयोद्धारः सैन्यनिवेशा इव देशाधिपतिः॥

एवम्—सर्वंदातारः पृथिवीपतय इव भेरीरवः बहुधातारः पृथिवीपतय इव गिरिकूटः, मृगयातारो व्याधा इव अश्वः।

धातुश्चतुर्थ्येकवचनमिति—

धातोरग्रे शून्यस्तान्याबहुवचनैकवचनं नादि मादिलादि शब्दैः। यथा। अभवन्नितान्तम्, अस्मरन्मानवम्, व्यचरन् लीलया।

इति चतुर्थस्तवके अद्भुतं नाम द्वितीयं कुसुमम्।

---

अथ चित्रम्।

एकार्थत्वेऽनुलोमप्रतिलोमशब्दाः। यथा—नयन, नर्त्तन, कनक, कटक, महिम, मरिम, करंक, कलङ्क, कालिका, कारिका, सारसा, सहास, मध्यम, करक, स्वदस्व, नर्वन, नव्येन, तावता, तारता, ताव्यता, विभवि, केनके, कचक, करक, कञ्चुकं, कामुका, काशिका, नंदनं, दमलदम्, दंतदं, दम्भदम्, दरद, लगुल, योग्ययोः, रततर, हावहा, पतदातप, वरभैरव, कलपुलक, वरकैरव, वरपौरव, तरणीरत, रदसोदर, नदभेदन, दम्पतीपदम्, लङ्काकंकालं, माधव, वधमा, वल्लव, वन्देदेवं, लेखखले, रवीवीर, भानोर्नाभा, हंसासाहं, जीवावाजी, यमोमोय, विभुभुवि, वदद्व, नववन, चललव। अन्यार्थत्वे—यामा, माया, साया, यासा, विभुवत, वद, कंपं, राधा, भावा, सुवामा, नन्दक, सान्निका,

(अत्र अनङ्गेति ङकारच्युतिः)

बिन्दुच्युतकम्, यथा—

साहसेनाश्रिता पद्मा लयेन जलदात्यये।
अर्णवस्याभिसरणे रहो मुञ्चति वाहिनी॥

(अत्र हंसेन रंहः)

मात्राच्युतकम्, यथा—

दशान्तरस्थितान् भावान् कलातीतानपि स्फुटम्।
कवलज्ञानतो योगी प्रत्यक्षानिव वीक्ष्यते॥

(अत्र देशकालकेवलः)

प्रश्न एवोत्तरम्, यथा—

पथि कस्य हृतं वस्त्रं? नदी का सरसीसती?।
शालेः का सारवत्युर्वी? का मलाम्यकरी दृशोः?॥

क्रियागुप्तकम्, यथा—

प्रातः प्रातः समुत्थाय द्वौ द्वावृषिकुमारकौ।
निर्मलां सरसीं गत्वा प्रक्षाल्य च कमण्डलुम्॥

(अत्र प्रातः पूरितवन्तौ; प्रापूरणे आकारान्तो धातुः)

कर्तृक्रियागुप्तकम्, यथा—

नागरङ्गं फलं स्वादु छित्वा छित्वा वने वने।
वीप्सातः कथितो ह्यर्थः पठ्यते ननु बुध्यते॥

(अत्र वी पक्षिणी; प्सातः भक्षयतः)

कर्तृगुप्तकम्, यथा—

हारकेयूरवस्त्राणि रत्नानि विविधानि च।
ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम्॥

(अत्र इभ्यो धनी)

गौरी-वदन-संकाशं श्रद्धया शशिनं दधौ।
इहैव गोपितः कर्त्ता वर्षेणापि न लभ्यते॥

( इहा कामहन्ता )

आधारसम्बन्धकर्त्तृगुप्तकम्, यथा—

कावेरी रम्यराजीव विलसद्गन्धबन्धुना।
मधुमाससमीरेण वर्द्धते कुत? कस्य? का?॥

( अत्र—कौ पृथिव्याम्, एः कामस्य, ईः श्रीः )

अक्षरच्युतकम्, यथा—

नतनाकिमौलिमणिमण्डलीविभा-
भर भासुराङ्घ्रिसरसीरुहासना।
तव शर्मणे भवतु भारती भृशम्
दृढ़जाड्यखण्डनदिनेश-भाततिः॥

अत्र मञ्जुभाषिणी-छन्दसि प्रतिपादमाद्याक्षरद्वयपाते रथोद्धतावृत्तम्, अन्त्याक्षरद्वयपाते नन्दिनीवृत्तम्, आद्याक्षर-द्वयपाते अन्त्याक्षरद्वयपाते च भद्रिकावृत्तम्।

एवं छन्दोऽन्तरेष्वप्यूह्यम्। तथाच—

आद्यन्तस्थायिनी नित्यं कमला त्वयि वर्द्धताम्।
अमध्यमञ्च सुकृतं लभस्व वसुधापते!॥

अक्षर-व्यत्यय-प्रमुखानि चित्राणि यथा—

अहङ्कारमलङ्कारं वालिशाः कलयन्ति ये।
हलविन्यासमात्रेऽपि कौशलं कलयन्ति ते॥

पङ्कजस्य स्थितो मध्ये सत्यलोकान्तमास्थितः।
कल्पानामादिभूतश्च क एष न पितामहः॥

तरणिं पश्य सुश्रोणि। नाथ! कुत्रास्ति नौरिह।
सवितारं प्रिये! वच्मि, प्रिय! दूरेऽधुना पिता॥

कण्ठे त्वन्नाम-रत्नानि धारयामि यदा यदा।
हारयामि तदानेदं जन्म मन्मथ-मर्द्दनम्॥

भव-सम्भव-सन्तापं हर! संहर सन्ततम्।

मम नाम मनागन्यो नयतो नयतागतिः॥

पङ्क्तिबन्धः—

महेश! ममता-राममवमाममरोत्तम!।
महत्तम! महोधाम! मतिस्तोम! मनोरम॥

षोडशदलपद्मबन्धः—

भीमकासंदमश्रीमत् सोमधामन्तमस्मम।
नमस्ते महिमस्तोम धामसोम समत्तम॥

अष्टदलपद्मबन्धः—

न तयार्थो गिरा या न-नयाराध्य! जना वन!।
नवनाथ यवाटीन! नटो-वारित-यातन!॥

प्रातिलोम्येन स एवार्थः—

वशिनः शिव! के? लोके नेशाने करुणाकर!
सदनामोह! तिष्ठन्ति नम्रा न नव ये वत॥

गतप्रत्यागत श्लोकः—

नन्दि-नन्दित तापच्छिद मोक्षामर पावन!।
रक्ष नाथ! मतिज्ञेय! ज्ञ! विभो! वशिता मम॥
ममतां शिव! भो! विज्ञ! यज्ञेतिमथनाक्षर!।
नव-पार-मक्षामोद! छिप तात! दिनं दिनम्॥

गत प्रत्यागतपादः—

वन्दे मन्दमदं देवं दम्भितामसताभिदम।
मदाभोम मभोदामसङ्गमम् विविमङ्गमम॥

गतप्रत्यागतार्धः—

रक्षमारपविनाम! रमानन्दनसाय! [illegible]।
[illegible] मार मनाविपरमाक्षर [illegible]

[illegible] श्लोकार्धेन गोमूत्रिका:—

देवदेव! [illegible] [illegible] [illegible]

मारमार! धाम धाम! मां समांस! रक्ष रक्ष॥

विषमं विषमं भुजगं भुजगम्,
वपुषा वपुषा ललितां ललिताम्।
वहता वहता भवता भवता,
जगताऽजगता म मता मम ता॥

(तथा) मदनदाहिनि! वीतविप्लवे!,
प्रमथिताम्बककालवले! स्थिरम्।
नगसुतारतिरक्तहृदिस्थकम्,
न न मनोरमयामि समुन्मदम्॥

वेदवेदान्तनिर्णीतरूपस्तुवे,
त्वामपेताधिकल्लोलजालेश्वरम्।
योगचिन्तामभिव्यक्तनेदिष्ठकम्,
ध्यानलीनोऽहमर्द्धमितं मुक्तिदम्॥

यमकः—सदा सदानन्दविकासितं सितम्,
दयोदयोल्लासितमाधवं धवम्।
धराधरावास मसम्भवम्भवम्,
स्तुमोऽस्तु मोदाय वृषासनः स नः॥

समुद्गकः—निर्माति पाति विनिहन्ति च यः प्रमुक्त-
दोषं स्मरामि तमहो हरमं त कान्तम्।
भोगीन्द्रभूषितजटाम्बवणाङ्घ्रिकण्ठ-
दोषं स्मरामि तमहो हरमं त कान्तम्॥

(तथा) पुण्यामृता वद्दुदरानघतोयपाता,
कोटीरगा श्रयभवानऽज! निर्धुनीते।
पुण्यामृता वद्दुदरानघतोयपाता,
कोटीरगाश्रय! भवानजनिर्धुनी ते॥

दरचर:—नानानुमानमननानमनान्मुनीना-

मेनोनिनुन्नमसुनाऽनमनामनेन।
मेनेन-मानिनसुमेनमनूनमान-
मेनं नमामि न नमाम मनामिनाम्ना॥

निरोष्ठ:—

लीला-कङ्काल-खेला-कलित-कलकल: कालरात्री-कलत्र:,
कालीन्दी-काल-कण्ठ: शिशिर-कर-कला कन्दली-कान्त-काय:।
कैलासाक्रीड़केलि: सकलकलयिता नेत्रकीलाल राल:,
कल्याणं काल-काल: स किल कलयतान्नि:कल: काल-कन्न:॥

गतप्रत्यागतपाद:—

भासा निश्वास-गल्लं गल वि(ष)विगलल्लं गमश्वानि-साऽभा (दृ,
यं) द्यं वै दच्चोरुलत्राजनमऽन (म) नमनजत्रासरुच्चोदवैद्यम्।
सं तं वह्वाजिदम्भे सह्मऽस (म) ह्सं भेदजिह्वावतसम,
वन्देऽवं देयमत्या समन (य) नसमत्यामयय देवदेवम्॥

गोमुत्रिकाबन्ध:—

पातु नाकापगा माता सुतानिव बुधातलम्।
अतुल्याकाशगायाता हिताय वसुधातलम्॥

असंयुक्तापुनरुक्ताक्षरम्—

अगूढ़ेन: कुठाराभजले! शेषफणाच्छवे!।
बौ धौ घं देहि झटिति पीडयाथासुख च मे॥

द्व्यक्षर:—गौरं, गौरोगुरोरगं, गरागार, गुरुरगम्।
गोगं, गंगेगरं, रंगारोगरागारिरगगो:॥

(तथा) ससुरासुरसंसारसारा, सरससारसा।
ससार सारसा, सारा, सासुरं सुरसा, सरित्॥

सर्वतोभद्र:—

रसासार! रसासारसाधिताऽहिहिताधिसा।
रताक्षताता क्षतारमाऽहिताऽस्तु सुताहिमा॥

गतप्रत्यागतः—भाति रागवती या मा हरेरीशतयांज सा।
साऽजरान्तशरीरेह मायाऽतीवगराऽतिभा॥

गोमुत्रिका—नारायण! गदापाणे! पुरुषामरनाथ। माम्।
स्मराद्रेण हृदा चीणे कुरुष्व मयि नाथमाम्॥

द्व्यक्षरः—पापापापतिपततां पोतः पातूपतापतः।
पाता पिता पूतपपत्पतिपोततताततपः॥
नितान्तनूतन ताततता नन्ततनून्नतिम्।
नानाननानन्तनुतं तन्नूनं नीतितो नुत॥
नागविशेषे शेषे शेषेऽशेषेऽपि संहृते जगति।
हस्यसि कालं कालं का लङ्कालङ्घने स्तुतिर्भवतः॥

देवादे। वासुदेवाच्युतगरुडह! सकलाना कलानां कलानाम्,
पद्मा पद्माभ! पद्मास्ति तव परमहेला महेला महेला।
शेषे शेषे च शेषेत्वमगगुरुमनन्तामनन्तामनन्ता-
पाता पातालपातात् प्रहतकितवराहोवराहो वराऽहो!॥

स्वजनककविनामाङ्कित षडरचक्रबन्धः—
(य) स्यां देशभ (वा) स्थित स्थि (दि)
वराट् नूनं दिवं रच्च (ति),
(प्र) स्तावे प्रवि (भ) ज्य यश्च (दि)
तिजा नादत्तलोकत्र (यम्)।
(ति) ग्मांशुच्चिम (ट) ज्जले ह (दि)
सता मेनः च्छयाविष्कृ (तम्),
(तम्) मोचा (य) मज (प्र) जाप (ति)
क्षता (ति) ष्यक्ति (यम्) संत (तम्)।

इति कविकल्पलतायामर्थोद्भवचतुर्थस्तवके चित्रं
नाम तृतीय कुसुमम्।

---

अथ सादृश्यम्।

वेण्याः सर्पासिभृङ्गाल्यः, केशपाशस्य चामरः।
नीलं कण्ठकलापोऽपि, धम्मिल्लस्य विधुन्तुदः॥ १॥
सीमन्तस्याध्वदण्डौ च, ललाटस्याष्टमी-विधुः।
फलकश्च कपोलस्य, चन्द्रमा मुकुरः स्थली॥ २॥
भ्रुवोः खड्ग-धनु-र्यष्टि-रेखा-पल्लव-वल्लयः।
दृशोश्चकोर-हरिण-मदिरा-खञ्जनोऽम्बुजम्॥ ३॥
कुमुदं नीलमम्भोजं श्रुतेर्दोला प्रपाशकः।
नासावंशस्य वंशाधो मुख-तुणीरचञ्चवः॥ ४॥
तिलप्रसूनदण्डौचाऽधरस्य नवपल्लवः।
बिंवफलं प्रवालं च, दन्तानां मौक्तिकावलिः॥ ५॥
कुन्ददाड़िम्बवीजानि, हीरकाश्च स्मितस्य तु।
ज्योत्स्नापुष्पाणि पीयूषं, श्वासस्याम्भोजसौरभम्॥ ६॥
जिह्वायास्त्वञ्चलोदोला वेण्या भृङ्गी-पिकीरवौ।
सुधामधु च, वक्त्रस्य शशी पङ्कज-दर्पणौ॥ ७॥
कण्ठस्य कंबुरंसस्य कुम्भौ, बाह्वोश्च वल्लरी।
मृणाललहरीशाखापाशाः पाणिपदस्य तु॥ ८॥
पल्लवोऽम्बुजमङ्गुल्याः पल्लवो नखपद्धतेः।
रत्न-तारा-प्रसूनानि स्तनयोः कुड्मलौ घटौ॥ ९॥
कुम्भि-कुम्भौ गिरीचक्रौ बिल्वे मध्यस्थवेदिका।
सिंहमध्यञ्च रोमाल्यारेखा-शैवाल-वल्लयः॥ १०॥
नाभेरम्भोजमावर्त्तं ह्रदौ विवरकूपकौ।
त्रिवल्या वीचि सोपान-निःश्रेण्यो जघनस्य तु॥ ११॥
पुलिनं पीठफलके नितम्बस्य स्थलं पुनः।
ऊर्वोः कदलिका-स्तम्भे मकरौ करभस्तथा॥ १२॥
जङ्घायुगस्य तु स्तम्भौ गतेर्हंसमतङ्गजौ।

इमान्यन्यान्यपि स्त्रियोरुपमानं यथोचितम् ॥ १३ ॥
पुंसोऽङ्गैरुपमानानां विशेषः कोऽपि कथ्यते।
स्कन्दस्य वृषरत्नाच्चस्कन्धोवाहोरहीश्वरः ॥ १४ ॥
हस्तिहस्तपविस्तम्भार्गलादण्डाश्च वक्षसः।
शिलाकपाटौ यानस्य प्रमत्तोऽस्तगतिः पुनः ॥ १५ ॥
एकैकेनापि धर्मेणोपमानं बहुधा भवेत्।
धर्मा वर्णक्रियाकाराधाराधेयादयो मताः ॥ १६ ॥
अभ्यासः स्याद्विभक्तीनामुपमानोपमेययोः।
उपमावाचकानाञ्च धर्माणाञ्च विपर्ययात् ॥ १७ ॥
विपर्ययादिति सर्वत्र सम्बध्यते।

विभक्तिविपर्ययादभ्यासो यथा—

स विपक्षान् प्रचिक्षेप तमस्तोममिवार्य्यमा।
द्विषन्तं नाभियुध्यन्ते ध्वान्तोद्भेदा रवि यथा ॥ १ ॥
रविणेवान्धकाराणि तेन विक्षिपिरे द्विषः।
द्रुह्यन्ति दुर्जनास्तस्मै घूका इव विवस्वते ॥ २ ॥
ततसुः शत्रवस्तस्माद् यूका इव दिवाकरात्।
तमोवद्रिपवस्तस्तास्तस्यार्कस्येव तेजसा ॥ ३ ॥
रवाविवोदिते तत्र शत्रवोऽध्वान्तवद्गणाः।
एवमादिप्रकारेण ज्ञेयमर्थान्तरेष्वपि ॥ ४ ॥

उपमानोपमेययोर्विपर्ययाद् यथा—

विजयी विद्विषोऽजैषीद्भास्वानिव तमोभरम्।
अध्वंसयद्वविध्वान्तं विजयी विद्विषो यथा ॥ १ ॥
लुलितालकवल्लीभिर्भासते भामिनीमुखम्।
ललल्लीलालिमालाभिर्नलिनी नलिन यथा ॥ २ ॥
आभाति पद्मिनी पद्मं भ्रमरा षट्पदपङ्क्तिभिः।
कान्तामुखमिवानीलविलोलालकवल्लिभिः ॥३॥

इत्यादि।

स्पर्द्धते जयति द्वेष्ट्यनुकरोतीत्यादिकाः क्रियाः।
तथा लाक्षणिकाः शब्दाः व्यासेधाद्या इवार्थकाः ॥ ४ ॥

व्यासेधोधरणीधरेशितु रनध्यायःसुधायाविधो,
रन्तर्द्धिर्द्दनदाचलस्य निधनं दुग्धोधसिन्धोः पिधा।
प्रत्याख्यान ममा नवद्विपमहादेहद्युतेर्निह्नवो,
जाह्नव्यास्तवमभुभुजङ्ग यशसां भारो दिशां हारति ॥ १ ॥

यथाच—

इन्दुर्वक्त्रस्य वीप्सा सदनमुपकथा पादयोः पङ्कजाली,
पर्य्यायोलिःकवर्य्यास्तनुतनुमहसां वर्णिका कर्णिकारम्।
आभासः कुम्भिकुम्भद्वयमुरसिजयोः कामकोदण्डदण्डः,
पाषण्डो भ्रूलतायारतिरभिनयनं यत्सरूपस्य यस्याः ॥ १ ॥
उपमा इव सन्देहे किं योगः किं सुखं किं शशी यथा ॥ २ ॥

इति कविकल्पलतायाम् अर्थाख्यचतुर्थस्तवके साहश्य नाम चतुर्थं कुसुमम्।

---

## अथ रूपकादिकम्।

उपमैवेवादिविना द्विधा रूपकमिष्यते।
रत्नाकरे भवेद्भेद्यं रूपकं तोय्यमम्बुदे ॥
भुव्याधारस्तथाधेयं सिद्धे वर्णनभेदतः ॥
ध्वान्ताहि विषनागाब्धिशैलवृक्षघनाग्नयः।
रक्षःशङ्खादयो भेद्या रूपकोक्त्या विरूपकैः ॥
वनचक्राब्धिचक्राङ्ग चक्र-चातक-षट्पदाः।
पिककेकिमुखास्तोय्यं रूपकैर्मित्ररूपकैः ॥
स्वगुणैर्भूनभोऽम्भोधिनदीवननगादयः।
रूपकस्थैः स्युराधारे राधाराख्यं हि रूपकम् ॥

रत्नसिंहसरोजाम्भोज-चन्द्रादित्यद्रुमादयः।
स्वधारैरूपकप्रोक्तैराधेयं केवलं क्वचित् ॥
कुलाम्भोनिधिमाणिक्य वंशकाननकेशरी।
भवारण्यामृतसरोनीतिगङ्गासरोरुहम् ॥
कुलाकाशेन्दुतीक्ष्णांशुसंसारमरुभूरुहः।
जनमानसचक्राङ्ग शौर्य्यविन्ध्याद्रिकुञ्जरः ॥

अथ रूपकोपयोगिशब्दाः—

नागाङ्गवृक्षनिधिमेघमृगाङ्कसूर्य्या-
ऽऽकाशाग्निसिन्धुहरिदीपकसौधकुम्भाः।
चक्राङ्गचातकमयूरचकोरचक्र-
पुंस्कोकिलावनसरोम्बुजरत्नभानि ॥
ज्योत्स्ना नदी शशि-कला सरसी पताका
वल्ली वनी कमलिनी दयिता सुधा श्रीः।
कादम्बिनी-सुरभि-वृष्टि-सुरा-विमुक्ता-
तारा-करेणु-कलिका-लहरी-कदल्यः ॥

अथारोप्यगुणाः—

विवेकरजनीनाथसम्बर्द्धितशमाम्बुधिः।
गुणहंसमनोहारिप्रतिज्ञावाहिनीरयः ॥
कीर्त्तिध्वजांचलभ्राजिमानमत्तमतङ्गजः।
धैर्य्यविन्ध्याचलोत्सङ्गरङ्गत्कीर्त्तिनर्मदः ॥
गुरुशौर्य्यांवरक्रोड़क्रीड़त्तेजोदिवाकरः।
दानरत्नाकरक्रोड़प्रक्रीड़त्कीर्त्तिचन्द्रमाः ॥
प्रतिज्ञावाहिनीपूरपरिप्लुतरिपुद्रुमः।
शौर्य्यदावानलप्लुष्टद्वेषिकीर्त्तिलतावनः ॥
वैरिकैरवकान्तारम्लानिकृद्वैर्य्यभास्करः।
गुणसागरविस्तारविवेकरजनीकरः ॥

धैर्य्यहर्य्यक्षवर्य्यश्रीविलसद्गुणकाननः।
गुणमुक्तागणश्रेष्ठविवेकतटिनीपतिः॥

अथ भिन्नरूपकम्—

सङ्ग्रामपाथोनिधिसम्भवेन भवद्यशःकैरविणीधवेन।
लीलापरिस्मेरितदिङ्मुखेन म्लानिस्म विद्वेषिमुखाम्बुजानि॥

यथाच—

यम-महिष-विषाणं भ्रूलता-काल-रात्रेः
कुपित-नियति-भालारात-लेखा-ललाम।
अधिसमिति विपक्षैर्लंक्ष्यते वीरलक्ष्मी-
स्तन-तट-नख-लक्ष्म त्वद्धनुः क्षौणिपाल॥

यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ यथा—

किं ब्रूम हे धरणिमण्डलमण्डनानाम्
देव! त्वदीय-यशसा महतामनीतिम्।
यद्विद्विषन्ति जगदीश शरीरशोभाम्
यच्चास्य हासमुपहासपथं नयन्ति॥

अतद्रूपस्यान्यथाध्यवसानमतिशयार्थमुत्प्रेक्षा यथा—

त्वत्कीर्त्तिकान्तिधनमपहृत्य राजन्
दिव्यं सृजन्निव जगत्यपवादभीतः।
इन्दुः सुधावपुरपि प्रभुरोषधीना-
मद्येष लक्ष्ममिषसर्पधृतो न शुद्धः॥

यथाच—

समिति त्वत्करवालः पीत्वा मातङ्गकुम्भकीलालम्।
अनुतापीव व्रतयति रिपुनृपतीनां यशःक्षीरम्॥

यथा—

द्विषन्मृगाक्षी नयनाञ्जनानि यदेष नित्यं कवलीकरोति।
क्षितीश तेनाञ्जनसन्निभैव विभाविभातिस्म भवत्कृपाणे॥

अन्योन्यभ्रान्तिकोऽभेदो यदाऽन्योन्यं द्वयोर्भ्रमः।
तत्रोपमेयानुक्तौ तु समासोक्तिर्मता यथा॥

कीराः पचेलिमफल भ्रमतः पतन्ति
जम्बू-तरु-प्रसव-लग्न-मधुव्रतेषु।
एते च चञ्चुपुटकेषु विशन्ति तेषां
सान्द्राः पलाश कुसुमावलिमाकलय्य॥

कार्य्यप्रवृत्तौ भ्रमतः साफल्य जायते क्वचित्।

यथा—तव विधुमणिसौधप्राङ्गणे चन्द्रबिम्ब-
प्रतिकृतिमनुफुल्लत्के रवभ्रान्तिभाजः।
असकृदमृतविन्दुष्यन्दपानेन भृङ्गाः
प्रथमरमकरन्दस्वादुसौख्यं लभन्ते॥

इति कविकल्पलतायाम् अर्थाख्ये चतुर्थे स्तवके
रूपकादिकं नाम पञ्चमं कुसुमम्।

---

## अथ समस्यापूरणोपायः।

अथ संक्षेपतो वच्मि समस्यापूरणे विधिम्।
तत्रादौ विशदाः पञ्च प्रोच्यन्ते कारिका यथा॥

कल्पादि सिन्धुलघुभिर्गुरुता युगान्त-
दूरावलोकगुरुभिर्लघुता विधेया।
विष्णोरधोमुखतया प्रतिबिम्बतश्च
स्याद्वैपरित्यमुदकादिषु युग्मता च॥

अयमर्थः—कल्पास्यादिः कल्पादिः, लघुः क्षुद्रपदार्थः; एतैर्हेतुभूतैर्वस्तुनो गुरुता विधेया। सृष्टौ हि स्रष्टा महावयवानेव निर्मिमीते स्म पदार्थान्, कालक्रमेण च सर्वे दुर्लभा अभूवन्, सामुद्रियद्रव्येषु शाश्वतिक एवातिरेकः, लघूपेक्षया

ततोऽधिकस्यापि महिमा योज्यः, युगादिभिर्हेतुभिर्लघुता कल्पनीया च, युगान्तसमये हि सर्वं लघु भवति, दूरे दृश्यमानाः पदार्थाः अतिक्षोदीयांस इव भासन्ते ; गुर्वपेक्षयाप्येवमाकलनीयम्।

उदाहरणानि यथा—

कल्पादिकाले गुरुदेहदेश्या पिपीलिका राजति शैलतुल्या।
तदा लघीयानपि गण्डशैलः श्रीखण्डशैलस्य तुलां तनोति॥

सिन्धुना यथा—

अहो पयोराशिनिवासि यादः पिपीलिका राजति शैलतुल्या।
सदा जनानां महतां हि सङ्गो धत्ते लघूनामपि गौरवाणि॥

माहात्म्य तस्य पाथोधेर्व्याख्यातुं शक्यते कथम्।
सापि यत्र विभात्यब्धः कीटिका कुम्भिसन्निभा॥

स्थले स्थिता यावन्तस्तावन्तो जीवा जलेऽपि निवसन्तीति बोद्धव्यम् ; ते सर्वे निर्वासितखर्वभावाः स्वभावादेव।

लघुभिर्यथा—

कृमिप्रमाणेन महत्त्वमाङ्गी पिपीलिका राजति शैलतुल्या।
यस्मादधोधः परिदर्शनेन सदा लघूनामपि गौरवाणि॥

लिक्षा लक्षायतः कीटकोटिः करिघटायते।
बिन्ध्याद्रिमुद्रामाधत्ते मत्तेभः कलभायतः॥

अथ गुरुपदार्थस्य युगान्तेन दूरावलोकनेन गुरुभिश्च लघुता विधेया। यथा—

कल्पान्तकालकवलीकृत सर्वगात्रो
गोत्रो बिभर्त्ति सुतरां परमाणुरूपम्।
सवर्त्तपूर्वसमये बिभरांबभूव
यो जातरूपधरणीधर सन्निभत्वम्॥

विश्वम्भरास्थितपदार्थसमोच्चणोत्कः
स्वर्लोकमार्गचरखेचरकामिनीनाम्।
अभ्यागतो नयनवर्त्म महाचलोऽयम्
सत्य विभर्त्ति परमाणुसमानरूपम्॥

कल्पान्तकालधरणीधरणप्रवृद्धो
कोलाधिराजतनुमानविलोकनेन।
शैलो विभर्त्ति परमाणुसमत्वमेव
सर्वस्य लाघवमहो गुरुसन्निधौ स्यात्॥

परमाणुतनोरग्रे कीटिका वारणायते।
वारणोऽपि सुवर्णाद्रिमानतः कीटिकायते॥
महाद्रिशिखरस्थानं वारणः कीटिकायते।
साधुचित्तानुमानेन महाद्रिः कीटिकायते॥

इत्यादिगुरुतरपदार्थेन गुरुतरपदार्थस्य लघुता विधेया।

धिष्णोरधोमुखतया वैपरीत्यं यथा—

कालीयाहिग्रहव्यग्रे यमुनायां जगन्निधौ।
शङ्कयाधोमुखं जातं विपरीतं जगत्त्रयम्॥

अपरेणापि प्रकारेण विपरीतीकृते कृष्णे तदुदरवर्त्ति-जगत्त्रयमध्यस्थितः सर्वोऽपि पदार्थो विपरीतो भणनीयः।

प्रतिबिम्बतो वैपरीत्य यथा—

तडागे दर्पणप्राये प्रतिबिम्बादजायत।
जलमध्याकृतः कृष्णप्रसादः कलशोपरि॥
त्वन्मुखस्याब्धिसंक्रान्ता धूमवर्त्तिरधोमुखी।
भाति यान्तीव पातालं पवित्रयितुमुज्ज्वला॥

उदकादौ युग्मत्वं यथा—

रात्रौ चन्द्रोदये तोयप्रतिबिम्बितविग्रहः।
लोकैरेकोऽपि कोकोऽयं सद्वितीयः समीक्ष्यते॥

पूर्वाद्रौ रत्नभित्त्यन्तर्जातार्कप्रतिबिम्बतः।
शङ्क्यते शत्रुकान्ताभिः किमुदेति रविद्वयम्॥

चन्द्रान्धकाररविकीर्त्तिकुकीर्त्तिसन्ध्या-
रागात् पिषङ्गकृतवर्णविपर्य्ययेण।
दृष्टान्तवद्यदिशब्दतया पुराणै-
र्वात्सल्यशोकमधुघातवियोगसादैः॥
स्वप्नेन्द्रजालिकमतिभ्रमचित्रमाया-
मन्त्रौषधीमणितपः पदभङ्गभावात्।
शौर्य्योघवाञ्छितमनोगतिपुण्यदेव
प्रश्नोत्तरच्चयसमासविभिन्नसाध्यात्॥
श्रीहाटकेश्वरजगत्प्रलयग्रहास्त-
पाथोधिमन्थसमय प्रतिबिम्बभावैः।
संग्रामचक्रपुरचन्दनशस्त्रपातै-
श्चण्डीशपद्मगुरुताभिरथोपमानैः॥
तद्दुर्घटं भवति तत् प्रकटं पटीया-
नौचित्यचिन्तितपदं परिपूरयेद् यः।
पूर्वोक्तपद्मगदितैरुपदेशभारै-
रतैरितिस्म कविकल्पलताकृदाह॥

अथोदाहरणानि—

कृष्णरक्तादयो वर्णाश्चन्द्रेण श्वेताः क्रियन्ते। यथा—

उल्लसत्तुहिनज्योतिर्द्युतिविद्योतितोऽभितः।
कैलासशैलसङ्काशः काशते विन्ध्यभूधरः॥
जवापुष्पं जातिसमं सुवर्णं रजतप्रभम्।
सुधाकरकरस्पर्शाद् भाति चन्दनवन्मषी॥

अन्धकारेण यथा—

कैलासो विन्ध्यसंकासः कर्पूरः कज्जलप्रभः।

जपातापिञ्छगुच्छश्रीस्तमसा भाति लिम्पिता ॥

कृष्णश्वेतादयो वर्णा वालार्केण प्रथमं रक्तास्तदनु पीताः क्रियन्ते। यथा—

कज्जलं कुङ्कुमच्छायं जातीपुष्पं जपासमम्।
सुवर्णं पद्मरागश्रि प्रभातार्कप्रभाहतम् ॥

इत्थमन्यत्रापि वर्णविपर्य्ययः कार्य्यः। यदा पुनश्चन्द्रादीनामेव वर्णविपर्य्ययश्चिकीर्षितस्तदाकीर्त्त्यादिभिरेतेषामेव वर्णविपर्य्ययः।

स्वर्धुनीसलिलसन्निधिस्फुरत्तावकीनघनकीर्त्तिमण्डलैः।
विस्तृतैस्त्रिजगति क्षमापते! शीतरश्मिरिव वीक्ष्यते रविः ॥

अन्यवस्तूनां यथा—

मेदिनीदयित तावकैर्यशः स्वल्पसञ्चयैरुपचितैः समन्ततः।
क्षीरनीरनिधिसोमकोमलैर्जायते रजतकान्तिकज्जलम् ॥

हिमाद्रिसदृशो मेरुर्भाति कुङ्कुमविन्दुवत्।
भूमिपाल! भवत्कीर्त्त्या शुभ्रिते भुवनत्रये ॥

कुकीर्त्त्या यथा—

भूमिपाल! भवदीय-विद्विषन्मेदिनीपतिकुकीर्त्तिपंक्तिभिः।
प्रावृषेण्यजलवाहकान्तिभिः श्यामलो जयति यामिनीपतिः ॥

अन्यवस्तूनामपि यथा—

मेदिनीदयित! तावकद्विषत्प्रोज्झितद्गुरुतरायशःशतैः।
अन्धकारनिकरैरिवोद्धतैः कुङ्कुमं मृगमदायतेतराम् ॥

हिमाद्रिर्विन्ध्यवच्छुभ्रः स्वर्णं मरकतप्रभम्।
धराधर! भवद्वेषि कुकीर्त्तिं प्रसरैर्वभौ ॥

सन्ध्ययोर्यथा—

पूर्वभूधरशिरस्तटीचरः सान्ध्यरागपटलैः परीवृतः।

दृश्यतामिह विभावरीमुखे विद्रुमः प्रतिनिधिः सुधानिधिः॥

विद्रुमारुणविम्बोष्ठप्रभापाटलितद्युतिः।
वदने तव तन्वङ्गि! कर्पूरः कुङ्कुमायते॥

कान्तकोपपरवामलोचना लोचनान्तविततारुणद्युतौ।
सान्ध्यरागपटले सति क्षणं कज्जलं जयति कुङ्कुमोपमम्॥

स्वर्णं सिन्दूरपूरश्च कर्पूरं पद्मरागरुक्।
जपाकुसुमसंकाशैः सन्ध्यारागभरैरभूत्॥

वर्णान्तरसङ्गाद् यथा—

शशिमुकुटललाटे शैलजागण्डपाली-
विगलितमृगनाभिव्यक्तघर्माम्बुसिक्तः।
समजनि नरकारिश्यामलो यामिनीशो
जगति मलिनसङ्गात् को न मालिन्यमेति॥

मसृणघुसृणपङ्कप्रक्रियाभङ्गिजाग्रत्
कुचकलशविकासैः कुन्दचन्द्रोज्ज्वलोऽपि।
अगमदुदरभावं कामिनीकण्ठहारो
जगति भवति रागो रागिसङ्गान्न कस्य॥

क्षितिधरपतिपुत्रीमौक्तिकव्यक्तिभङ्गी-
निलयवलयमालाकान्तिजालावलीढः।
हिमरुचिरुचिरासीन्नीलकण्ठस्य कण्ठो
भवति विमलयोगान्निर्मलत्व न कस्य॥

अत्रोच्चैः स्फुर्जदभ्रंलिहगृहवलभीवर्ध्यवैदुर्य्यनिर्यत्-
ज्योतिर्यातप्रपातव्यतिकरविधुरीभूतशोभाभिभूतः।
कालिन्दीकालकान्तिः समजनि रजनीजीवितस्याधिनाथो
धत्ते को वा कलावानपि हिममलिनासङ्गतः कश्मलत्वम्॥

अहो राहुग्रहग्रस्तसमस्तोज्ज्वलमण्डलः।
इन्दुः कज्जलविन्दुश्रीर्म्लानिः कस्य न विप्लवे॥

दृष्टान्तवद्यदिशब्दतया यथा—

प्रतीच्यां यदि मार्त्तण्ड: समुदेति स्फुरत्कर:।
तदा संजायते नूनमग्निस्तुहिनशीतल:॥

पुराणै: पुराणचरितैर्यथा—

अगस्त्यमुनिनि:पीत नि:शेष जलमण्डलात्।
अह्न: पतिमह्न: शुष्कात्समुद्राद्धूलिरुच्छ्रिता॥
अतुच्छ वत्स वात्सल्य पिच्छिलीकृतचेतसा।
जनन्या मन्यतेऽत्यर्थं व्याघ्न: सौम्यवपु: क्षमी॥

शोकेन मधुनाघातेन वियोगेन मादेन च समस्या पूर्य्यते, यत एभिर्व्यासि: पुमान् विपरीतमाचरति। स्वप्नेऽघटमानमपि घटते। भो! ज्योतिषकलाकुशल! स्वप्ने दृष्टमिदं त्वं विचारयेदित्यादि कल्पनीयम्। इन्द्रजालेन मतिभ्रमेण चित्रेण च। भो। चित्रकर। ईदृक् चित्रं लिखेति वाक्यं रचनीयम्। माययाऽपि विसदृशं सम्भाव्यम्। मणिमन्त्रौषधीना प्रभावेन सर्वं साध्यते। यस्मादचिन्त्यो मणिमन्त्रौषधीना प्रभाव:। तपसापि सर्वं साध्यते। यत: सर्वं हि तपसा साध्यं तपश्च दुरतिक्रमम्।

पदभङ्गेन यथा—

मृगात् सिंह: पलायते। मृगमत्तीति मृगात् सिंहविशेषणम्, पलाय मांसाय, ते तव इत्यर्थ:।

अय मृग: समायाति मृगात् सिंह: पलायते।
इतो वेगात् पलायस्व त्वरितैस्त्वरितै: पदै:॥

शौर्य्येणोष्मणा वाञ्छितेन सल्लोभत्या पुण्येन दुर्घटमपि घटते। दैवप्रसादेनासाध्यमपि साध्यते। यथा—

नि:श्रीकोऽपि विभो! विभातसमये पश्यत्यवश्यं पुमान्,
यस्ते पद्मसमानमाननम[illegible]न्दिरामन्दिरम्।

देहोल्लासि किमु त्सुमस्त्वदपरं यस्य प्रसादाद्भुतेः
मूको जल्पति संश्रृणोति बधिरः पङ्गुर्नरीनृत्यति ॥

प्रश्नोत्तरेण यथा—

कस्तूरी जायते कस्मात् ? को हन्ति करिणां कुलम् ?
किं कुर्य्यात् कातरो युद्धे ? मृगात् सिंहः पलायते ॥

समस्यायां यत् साध्यं पदं तत् क्वचित् समासेन भिन्नं क्रियते । यथा—

कर्पूरपूरच्छविवादविद्यासंवावदूकद्युतिशुभ्रिताभ्रे ।
इन्दोर्नृपद्वेषितमोवितानसूर्य्योदये रोदिति चक्रवाकी ॥

हाटकेश्वरनमस्कारेण पाताले स्वर्गलोकावतारः । जगत्प्रलयेन मर्त्त्यलोकावतारः । ग्रहास्तेन नभोलोकावतारश्च । यथा—हाटकेश्वरयात्रायां शिवरात्रिमहोत्सवे ।

सुरेन्द्रादिभिरायातैः स्वर्गः पातालमाययौ ॥
जगत्प्रलयकालेऽसौ पृथ्वी पातालमाययौ ।
संहारघोरचण्डीशकोपाटोपादुदित्वरात् ॥
कदाचिच्चारभेदेन क्रमादस्तमुपागतैः ।
ग्रहैः सम्भाव्यते सम्यग् ययौ व्योम रसातलम् ॥
पाथोधिमन्थनारम्भे सम्भेदाद्देवनागयोः ।
पृथिव्यां स्वर्गपाताले दृश्येते स्म समागते ॥
दर्पणप्रतिमोल्लासि पयःपूरे सरोवरे ।
प्रतिविम्बच्छलादेतद् भुवि व्योम समागतम् ॥
सङ्ग्रामधीरवीराणां विलोकनकुतूहलात् ।
समायातैः सुरेन्द्राद्यैः स्वर्गो नभसि दृश्यते ॥
आकाशान्तरसञ्चारिहरिश्चन्द्रपुरच्छलात् ।
भूतस्य मिलनायैव जगाम धरणीं नभः ॥

आरामरावणरणे कपिमण्डलेन,
ग्रस्तीकृतैर्मलयजद्रुमचक्रवालैः।
रिङ्गद्भुजङ्गमुकुलैः परितः स्फुरद्भिः,
सम्भाव्यते नभसि सर्पपुरं प्रसर्पत्॥
श्रीकण्ठकण्ठदोर्दण्ड जटाजूटाहिमण्डलैः।
अहो पातालक्लोकोऽयं स्वर्लोककलिताश्रयः॥
अभ्रंलिहगृहव्यूह चन्द्रशालाविलासिभिः।
नरनारीगणैरेव मर्त्यलोको द्युलोकगः॥
सुमेरुशिखरप्रान्त स्फुरद्दिव्यवधूमुखैः।
परितः स्फुरितः शङ्के शतचन्द्रं नभस्तलम्॥
युद्धक्रुद्धभटच्छिन्नकुम्भिकुम्भस्थलोद्गतैः।
मुक्ताफलगणैः शङ्के दिवा तारकितं नभः॥
यदेतन्मयकाऽकारि कारिकारत्नपञ्चकम्।
कुरुतानवगीतेन तेन श्रवणपूरणम्॥
अथ चित्तसमस्यायाः पूरणोपाय उच्यते।
पदैः साधारणैरेव च्छन्दः सपूरयेद् यथा॥
अशेषजनताचित्तचमत्कारनिकेतनम्।
हरिसिन्धुस्फुरद्रोचिः केषां न कुरुते सुखम्॥
स्फुरत्सौदामिनीकान्तबहुलश्लाघनीयभाः।
कलधौतरुगत्यन्तं कुरुते सुखसम्पदम्॥
जनताविस्मयाधानं वसुधासुखकारणम्।
महतां चक्रवालेन व्यतिभाते समन्ततः॥
विशदच्छाययातीव विलसत् प्राणिसौख्यकृत्।
आश्चर्यशाला तनुरुक् तनुतेऽपचितिं सताम्॥
सदा विलाससदनं निदानं परमश्रियम्।
महासुखलतावीजं नेत्रयोः कुरुते रतिम्॥

विभाति विभुतास्थानं घनोपलसितोरुभाः।
मनोरमप्रभावासः कलया लोकसौख्यकृत्॥
हरिमातङ्ग-मच्छाय-रोचिः परमभूषणम्।
कस्यामोदैकहेतुर्नं गोमण्डलविभूषणम्॥
उद्दामविस्फुरत्कान्ति रुचिरं गवि भासते।
सदामोदपदं चित्रनिदानं हरिचारुभ॥
मनोहराकारतयातिरम्यता समुल्लसच्चारुकलानिकेतनम्।
अशेषभूमीतलवर्त्ति सौख्यकृद् विलोचनानां कुरुते सुखावलिम्॥

सामान्यशब्दकुसुमे ये सामान्यशब्दाः कथिताः तेऽत्रापि सञ्चारणीयाः।

यत्किञ्चिदत्र न मया गदितं ग्रन्थस्य गौरवत्रासात्।
मत्कृतकविकल्पलतापरिमलतस्तद्बुधैर्ज्ञेयम्॥

इति कविकल्पलतायामर्थाख्ये चतुर्थे स्तवके
समस्यापूरणोपायो नाम षष्ठं कुसुमम्।

---

अथ समस्याः।

अथ क्षितिख्यातकियत्समस्या पदाङ्कुरं पल्लवितं करोमि।
यच्छायमाश्रित्य कविर्न विन्द्यात् परिश्रमं वाङ्मयमार्गजातम्॥
त्रियामा शतयामा स्याच्छतचन्द्रं नभस्तलम्।
शतेषुरेषु पञ्चेषुर्भवेद् यूनां वियोगिनाम्॥
त्वद्गाम्भीर्य्यगुणस्याग्रे समुद्रो गोष्पदायते।
त्वन्मानससरोजान्तर्गगनं भ्रमरायते॥
अमर्त्तीभवतस्तत्र पीयूषपरिवेषणे।
अभून्नारदवीणाया अलावोरन्तरे सुधा॥
अधःकृतं क्षणादेव तेजोऽनर्थाय जायते।

दहत्येव हि धातारं दीपवर्त्तिरधोमुखी ॥
भालनेत्रानलोद्दान्तकज्जलौघमलीमसः।
महेश्वर-शिरश्छायी सोमः श्यामतमोऽभवत् ॥
निशीथे सैंहिकेयेन ग्रस्तसम्पूर्णमण्डलः।
गगनेन्दीवरोत्सङ्गे इन्दुरिन्दीवरायते ॥
हीनहत्या दधात्येव लाघवं महतामपि।
इति मत्वा द्विपद्वेषी मृगात् सिंहः पलायते ॥
पूर्वो ह्रस्वः परो दीर्घः स्नेहः सजायते सताम्।
असतां विपरीतस्तु स एव परिदृश्यते ॥
इहार्थसूत्रं यस्यादौ तेन शास्त्रेण निर्भरम्।
जिज्ञासा ब्रह्मणो यस्य क्रियते तदुपास्महे ॥
धन्योऽसौ पोत्रिणीपुत्रो यस्यासौ प्रलयापदि।
सगोत्रोऽपि स्थितो दंष्ट्रा कण्टकाग्रे महोदधिः ॥
भुव विभर्त्ति यस्यैकं शिरोहीनः सुलोचनः।
स त्वां प्रणमितुं स्तोतुं द्रष्टुं श्रोतुं च्तमः प्रभो ! ॥
अयशः स्वं सुतनुते तन्वाते तन्वते जिताः।
कज्जलालिकलज्ज्ञानां व्याजाद्दीपाम्बुजेन्दवः ॥
रत्नाभरणविद्योतपरया वातनश्वरः।
अन्धकारभयाद्दीपस्तन्वङ्ग्या नीयते शमम् ॥
भ्रामय्येद्विहतिश्रान्ते जगतीत्यरयो ब्रुवन्।
मक्षिकापादघातेन कम्पित भुवनत्रयम् ॥
उषाप्रीत्यै पटे सूक्ष्मे चिन्तितं चित्रलेखया।
मक्षिकापादघातेन कम्पित भुवनत्रयम् ॥
सभाभित्तिमणिश्रेणि प्रतिविम्बितविग्रहे।
धार्त्तराष्ट्रशतेऽतर्कि कन्दर्पाणा शतद्वयम् ॥
अहल्याकेलिकालेऽभूत् कन्दर्पाणां शतद्वयम्।

तत्पञ्चवाणीभिन्नाक्षः सहस्राक्षोऽन्धतां गतः ॥
बलिसद्मोच्चशालाग्र प्रतिष्ठितगभीरिमा।
उपपन्नतमा जाता प्राकारोपरि कूपिका ॥
लङ्कादाहे सुरैरुक्तं हनुमत्पुच्छवह्नितः।
सौवर्णो द्रवतां गच्छं स्तम्भ एष घृतायते ॥
उन्मीलत्तिलकं क्वापि क्वचित् प्रस्फुरिताञ्जनम्।
क्वचित् पत्रावलीकीर्णं श्रीमुखं पर्वतोपमम् ॥
गोलब्धजन्मा मधुरः शिखि-प्रीति-विवर्द्धनः।
उन्मीलदर्जुनच्छायो नवनीतायते गिरिः ॥
सद्म पद्मवदाभाति लसद्वारविराजितम्।
पत्रकेशरसंपूर्णं यदानन्दायते मनः ॥
घनबालमनोहारि सुमनोभिर्निषेवितम्।
बहुधातुलसत्कान्ति पुस्तकं मस्तकायते ॥
एषा न जातबालेन्दुर्घनोत्तुङ्गपयोधरा।
अभिरामवयोधामसन्ध्या वन्ध्यावधूरिव ॥
स्निग्धालिबद्धसौहार्द्दा सरसामोदमन्दिरम्।
इयं गुणवती भाति पुष्पमालेव कामिनी ॥
कलानिधिकरस्पर्शप्रसन्नोल्लासितारका।
विभ्राणाम्बरमानीलं यामिनी कामिनीयते ॥
उल्लसत्पार्थिवद्रव्योपासिता जीवनार्थिभिः।
उपकण्ठाभिरामेयं गर्गरी नगरीयते ॥
कृतरामानिशप्रीतिरक्षविक्षेपकारणम्।
समुद्रतरणोल्लासी दीपोऽयं हनुमानिव ॥
वितन्वानो द्युतिं स्निग्धश्यामाञ्जनमनोहरः।
दीपो नीपोपमो भाति घनालोककविकस्वरः ॥
विस्फुरन्मीनमकरा हंससञ्चारमञ्जुला।

राजते सरसीवद्द्यौ रटत्कर्कटसङ्कटा ॥
आपः कादम्बिनीस्तन्वन् नलिनीलतयाऽन्वितः।
उल्लासितजगत्प्राणस्तडागो गगनायते ॥
आपीततारकः पादैराक्रान्तगिरिकाननः।
विभ्रदुग्रललामत्व विडाल इव चन्द्रमाः ॥
रुचा त्रिनेत्रदायादः प्रमदालयतां दधत्।
हरिणाङ्कः सुधाधारः सौधोऽयं चन्द्रमायते ॥
चूतश्चन्द्र इवाभाति कुहूभिर्जनितच्छयः।
धत्ते चकोरकामोदकरः खगमनोरुचिम् ॥
सोमः प्रीतिकरः कुर्वन् वनं सुबहुविद्रुमम्।
समुद्रोऽग्निरिवाभाति दीप्तश्रीसूः सदानवः ॥
स्फुरद्धिमकराक्रान्तः प्रकाशयन् क्रमेण धृतिजनकः।
अन्तर्वर्त्तिशिखावान् समुद्र इव भवति दीपोऽयम् ॥
असुद्राभारतस्तत्र पीयूषपरिवेषिणा।
अभूत्तावदवीणाया अलावोरन्तरे ध्वनिः ॥
गोवव्यजन्यो मधुरः शिखिप्रीतिविवर्द्धनः।
उन्मीलदर्ज्जुनच्छायो नवनीतायते गिरिः ॥
इहापि सूत्रं यस्यादौ तेन शास्त्रेण निर्भरम्।
जिज्ञासा ब्रह्मणो यस्य क्रियते तदुपास्महे ॥
पूर्व्वो ह्रस्वः परो दीर्घः स्नेहः संजायते सताम्।
असतां विपरीतस्तु स एव भुवि दृश्यते ॥
भुवं विभर्त्ति यस्यैकशिरोहीनः सुलोचनः।
स त्वां प्रणमितुं स्तोतुं द्रष्टुं श्रोतुं क्षमः प्रभो ! ॥
कलानिधिकरस्पर्शप्रसन्नोल्लासितारका।
विभ्राणाम्बरमानीलं यामिनी कामिनीयते ॥
वयसः शेषे सेवा पररूपं करोति तव देव ! ।

अधुना सुरतटिनीतटनिकटे वासो विनाशो वा ॥
चमू भरन् पञ्चदुदञ्चदुर्व्वीतले प्रयाणे तव भूमिपाल ! ।
अभून्नृपाणां विगलत्त्रपाणां कण्ठे कुठारः कमठे ठकारः ॥
पितामहादेशवशाद्रसायास्तलं यदा ते प्रविवेश वाणः ।
तदा बभूवार्जुनवीरवैरिकण्ठे कुठारः कमठे ठकारः ॥
आद्यं निशायाः क्षणमन्त्यमन्तर्बुध्वा विधुं तापिनमुष्णभानुम् ।
बिम्बं स्वकं भ्रान्ततया च कान्तं चन्द्रोदये नृत्यति चक्रवाकी ॥
सर्वस्य जन्तोर्भवति प्रमोदो विरोधिवर्गे परिभूयमाणे ।
तिरोहिते त्वद्यशसा नरेन्द्र ! चन्द्रोदये नृत्यति चक्रवाकी ॥
निशाकरोत्सङ्गनिषण्णतुङ्ग-कुरङ्गशृङ्गे जलधेर्निवासः ।
आसीत् पुरासीमपयःपयोधिर्निर्मन्थनादित्यवदन्मुनीन्द्रः ॥
सरोनिभे व्योम्नि सितांशुकाभे शशाङ्कमङ्कः कलयत्यमुं यत् ।
अवैम्यतः स्वच्छकलाच्छतारमाखुः खनत्यम्बरमम्बुमध्ये ॥
पूर्वाचलग्रावणि शृङ्गसङ्गि स्फुरन्महानीलविभाविलासैः ।
प्रलिप्तमूर्त्तिः प्रतिभाति किन्नु श्यामामुखे कज्जलविन्दुरिन्दुः ॥
मयूरमालोक्य महान्तमब्धिमण्डूकमत्तस्य मुखे महाहिः ।
विवेश वल्मीकविलम्बि शङ्कां वधं हि वामो विदधाति वेधाः ॥
राधामुखं चुम्बति कार्त्तिकेयः कर्णावतंसीकृतफुल्लपद्मम् ।
शृणोति तस्मादुदितञ्च गीतं कृष्णः स मुग्धे ! प्रणयी कथं ते ॥
कृष्णेन सृष्टा किल कौतुकेन स्थाना हि मैर्गोपिकया कयापि ।
हसन्तिकायां निहितास्य शत्या ननर्त्त वह्नौ नवनीतनारी ॥
समस्तनीहारधवादधाना घनाः प्रसूनेषुशिलीमुखालिः ।
उपास्यतां नील-तमाल-कान्ता क्षामोदरी वा क्षितिभक्षणस्य ॥
मशोः शृङ्गं सप्ततालप्रमाणं कल्याणाद्रिः सर्षपस्यैकदेशः ।
विन्दुः सिन्धुः सिन्धुरप्येकविन्दुः अब्धौ मुग्धे ! साधुनीचोपकारे ॥
जहास बन्ध्या स्वसुतास्यदर्शनात् चचाल पङ्गुः स्वपदेन लीलया ।

नितान्तमूकश्च वदावदोऽजनि प्रसादतस्ते तरुणेन्दुशेखर ! ॥
जहि तमो गरुड़ध्वज ! धूर्जटे ! कुरु करे गरलं पिब चामृतम् ।
सुविदितैव जगद्दुरितारिता निगदिताऽवत विश्वमजद्वयी ॥

संज्ञावियोगपरितापिनि गाहमाने
भानौ सरोविकसिताम्बुरुहं रजन्याम् ।
तन्नीचयेव मकरन्दगतात्मबिम्बः
चन्द्रोऽरविन्दकुहरे विहरत्यरोगः ॥

भ्रूचक्रशक्रविलसन्मणिबन्धतास्ति
तद्वच्च पञ्चशरशासनशालिता ते ।
सल्लाञ्छनत्वमपि गाङ्गजलोपितत्वम्
हारे हरं हिमकरे मकरेश्वरे च ॥

प्रत्यक् पयोनिधितटीचरमौलिचित्तं यद्
बन्धूकपुष्पसदृशं तमसोऽतिरेकात् ।
जानामि कुण्डलिततच्चकशङ्कया तन्-
मार्त्तण्डमण्डलमखण्डिशिखण्डितुण्डैः ॥

पीताम्बरोऽद्य जलदस्तडिदद्य लोला
भीमोऽद्य वारिनिवहः सरिदद्य दुर्गा ।
दोषाकरोऽद्य समयः क्षितिरद्य चाद्री
लोभा भविष्णु शिवमाविधुनोति तन्वि ! ॥

हयनिकरखुरोत्थैः कर्णवातावधूतै-
र्नवजलदनिभस्ते हस्तिसङ्घो रजोभिः ।
धवलयति धरित्रीमन्धकारप्रचारः
स्फुटमिति निगदन्ति क्ष्माप ! साश्चर्यमार्याः ॥

अजनि रजनिमध्ये मण्डलं चण्डरश्मे-
र्धनुरुदयमनभ्रा बिभ्रती द्यौश्चकास्ति ।
इह हि विधिरिदानीं दृश्यते देव ! वामः

प्रहिणु जनकपुत्रीं मित्रतामेतु रामः ॥
प्रविशतु हरिनाभीपङ्कजान्तर्निषस-
द्रुहिणचरणसेवां कर्त्तुमिन्द्रे ससैन्ये ।
अगणितपरिमाणे भृङ्गभृङ्गी दधानो
भ्रमति कमलकोषे मत्तमातङ्गसङ्घः ॥
जलमुचि जलपूरं मुञ्चति स्पष्टशब्दम्
प्रतिगज इव कोपादूर्द्ध्वविन्यस्तहस्ताः ।
सपदि समुपयातोदन्वता व्याप्तवक्त्राः
सरलितकरदण्डाः कुम्भिनोऽम्भः पिबन्ति ॥
भ्रमरमधुपालीपातसम्पातपुष्यत्-
कमलबहलगन्धं विन्ध्यमध्यास्य वाप्याम् ।
जलगतनिजमूर्त्तिं वीक्ष्यमानाः सशङ्कम्
सरलितकरदण्डाः कुम्भिनोऽम्भः पिबन्ति ॥
तिलकमलिकसंस्थं वीक्ष्यते पक्ष्मलाक्ष्या
मृगमदगजराजीराजितं यावदाशु ।
अमलजललवान्तस्तावदेवास्य पानान्-
मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ॥
कृशतरजठरान्तर्दैवकस्यात्मजायाः
सकलभुवनलीलावास ! यस्ते निवासः ।
मनुज दनुजदेवाश्चर्य्यभूतं तदेतन्-
मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ॥
भ्रमति कमलकोषे मत्तमातङ्गसङ्घः
सरलितकरदण्डाः कुम्भिनोऽम्भः पिबन्ति ।
मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम्
समुदितमिति मत्वा यः प्रगे सम्प्रयातः ॥
उदारालङ्कारा सुललितपदाऽऽविष्कृतरसा

समापन्ना भय्या मदनुगुणमाणिक्यसुभगा।
स्फुरद्वर्णाभ्यर्णस्थितजनघनानन्दवसतिः
समस्या वेश्येव प्रतिपुरुषमेषा विलसति॥
गते देशाद्देशं प्रणयिनि लताङ्ग्याः स्फुरदुरु-
व्यथायाः संतापप्रशमनविधौ नीरजयुगम्।
सखीभिर्निक्षिप्तं मुकुलितमुखं तत्र शुशुभे
कुचद्वन्द्वस्योपर्यपरमिव जातं कुचयुगम्॥
प्रसर्पत्तापार्त्तिप्रशमनविधानाय मलय-
द्रुमक्षोदाभ्यङ्गाविकलतरमभवत्पाण्डुरतनोः।
अभिज्ञोऽप्यज्ञासीत् कथमपि सखीनां परिकरो
न भेटोऽमन्त्स्याचमिकामिवमां प्रत्ययलुकाम्॥
अलिव्राताघातप्रसवमयचापे विजयिनि
प्रविष्टे पातालं जलनिधिपदव्या रतिपतौ।
अधो मैनाकस्य स्थितवति समस्तं समभवद्
धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः॥
प्रयात्यब्धिद्वारा फणिपतिभुवं हन्तुमसुरान्
पृथापुत्रे चापग्रथितसुमनोनीलमधुपे।
अधो मैनाकस्य स्थितवति समस्तं समभवद्
धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः॥
गेहे गेहे कति कति सदैः कान्तदेशेषु शय्याः
तल्लङ्घार्थं सुभग! न तथाकारि या योज्झितास्ताः।
स्थाने स्थाने कति कति न च ग्रन्थयः पक्ष्मलाक्ष्याः
कर्पूरस्योज्ज्वलिकलिलतापल्लमुक्ता न मुक्ताः॥
लीलालीलाकलनकुशलः स्फीतपीताम्बरश्री-
र्लोकप्राणास्तवितरिता भासुराम्भोजघोषः।
उष्णं सुप्तान्नशुभमवनेस्तूर्णपूर्णाखिलाशः

स्वप्ने दृष्टस्तरुणतुलसीभूषणो नीलमेघः॥
शालग्रामोपरिविनिहितं श्यामलाङ्ग्याः कराब्जम्
वीक्ष्यैकस्याः समुचितवरं पूजया लब्धुमिच्छोः।
एवं जाने मृदुभुजशिरश्चुम्बिताटङ्कलक्ष्म्याः
भृङ्गे पद्मं कमलमुकुले नालमस्मिन् मृणालम्॥
रोहिण्याः सरुषः पदं नभसि तं नाप्नोति यत्पङ्कजे
भ्रान्त्या तत्र चिरं स्थितिं विदधतो भृङ्गातिभाग्यं तव।
तत्पारस्परिकोऽपि मेऽस्तु विनयः प्रोच्येति रोमाञ्चितः
चन्द्रश्चुम्बति चञ्चरीकचरणं चञ्चच्चपेटाहतः॥
कूजत्येष रसालशाखिशिखरे प्रोल्लासयन् कामिनी-
कान्तः कामिनिमानसं परभृतः को वा मुख चुम्बति।
नास्मिन् मासि मृगीदृशः कृशतनोस्तन्मानमङ्गीकृतम्,
दूरीकृत्य कुरु प्रसादमधुना प्राणेश्वरेऽनागसि॥
तत्तुं पर्वतसन्निभेन कपिनाऽलाबूं कृतां वक्षसि,
क्षिप्रं वीक्ष्य निमज्जतीमथ नलसृष्टास्तरन्तीः शिलाः।
लोको नृत्यपरं विभीषण-जनं प्रेक्ष्याह सेतूद्यमे,
तुम्बी मज्जति सन्तरन्ति दृषदः प्रेतो दिवा नृत्यति॥
इन्द्रो मानुष-भावमेत्य पतगो भूत्वा भवत्यण्डजो
राजा रङ्कदशामुपेत्य कृमितां गत्वा द्रुमो जायते।
खर्जूरः खदिरत्वमेत्य कदलीकाण्डे पुनर्लीयते,
संसारे बहु-जीव-योनि-गहने धिक् कर्मिणां चेष्टितम्॥
उन्मीलद्रदकौमुदीकमबलावक्त्रं निदानं मुदाम्,
आलोलालकवल्लिभास्वदलिकम् प्राप्तं मुहुः पश्यताम्।
केषां चेतसि जायते न तदिदं काकोल-कान्ति-च्छविम्,
राहुं चुम्बति चन्द्रमाः प्रतिदिनं मध्यन्दिनेऽधःस्थितः॥
आराद्धुं किल तालकेश्वरमिता विद्येति या कीर्त्तिता,

आकाशे वनिताचतुर्दशदशग्रीवास्तयोर्विंशतिः।
तत्रासन् गिरिशे प्रसेदुषि नखस्वस्विन्दु-चन्द्रामल-
क्रोड़ेषु प्रतिविम्बिताः सहजया मूर्त्त्या च लङ्कापतेः॥
विष्णोर्भक्तिवशादहन्ति तरलस्थानेषु कण्ठ-स्रजाम्,
मत्स्यादींस्त्वदरातयो हृदि सदा हेम्ना विनिर्मापितान्।
गाढ़ालिङ्गनतो बभुः प्रतिमया युव्यक्तरूपास्तता,
देव! त्वद्रिपु-कामिनी-कुच तटे कृष्णावतारा दश॥
पृथ्वी चन्द्र-शुचि-प्रभामल-जलाऽऽवासः सुख स्पर्शना-
भीष्ट-प्रापक रत्न भास्वदुभय-प्रान्ताच्छ गुच्छावलिः।
एषा यैरवलोकिता सुकृतिभिर्जानामि पुण्येन तै-
रष्टौ धूर्जटिमूर्त्तयः स्तनतटे तन्वङ्गि! दृष्टास्तव॥
गण्डप्रान्तगलन्मदाम्बुतटिनी-प्रौढ़प्रवाहाविलै-
र्दिग्-दन्तावलदन्त-कालिम-गुणैः श्यामीकृता वायवः।
मूर्त्तीभूय गजाधिरोहपदवीमभ्येत्य देवद्विषत्-
सेनायां बलि दानवारिसमरे कालाग्निलीलां दधुः॥
दुग्धस्पर्द्धिभिरैन्दवैः समुदितध्वान्तेभपञ्चाननैः,
कृत्स्नेऽप्यंशुभिरन्तरे धवलिते द्यावापृथिव्योर्निशि।
धूम्राभं नयनाञ्जनालिक-लसत्सिन्दूर-पूरोद्भवम्,
काली-कज्जल शोणिमा धवलयत्यर्द्धं नभोमण्डलम्॥
सेवाव्यग्रनवग्रहागततमोभीत्या शिरस्थापगा-
लोकप्रोल्लसदीर्ष्यया गिरिसुतापञ्चाननत्रासतः।
शीर्षार्द्धाङ्कराश्रयात् पुररिपोरानन्दभाजोऽनिशम्,
चन्द्रश्चन्द्रमुखी मृगश्च युगपत् खेदप्रमोदौ दधुः॥
शम्भोस्ताण्डवडम्बरे तटभुवि प्रभ्रश्यतो मस्तकात्,
अम्भोधिः परमाणुमध्यमविशद् भीतो निशानायकात्।
सङ्गादस्य हि वर्द्धितो मम समस्या भूर्भवेदाशु ता,

तद्विघ्नोऽस्य भविष्यतीत्यवहितः सिद्धोऽदधानोऽष्टधा ॥
इन्दोर्विम्बमिदं न कुम्भजमुनेस्तत्काशपुष्पोपमम्,
वर्णे तत्र कलङ्क एष तदिदं तस्यैव कृष्णाजिनम्।
अम्भोधिः परमाणुमध्यमविशद् भीतो निशानायकात्,
इत्याशङ्क्य पुनस्तथैव ववृधे विज्ञाय तत्त्वं मुदा ॥
नित्यं सत्करपुष्कराश्रयपरो निर्नाशयन् कण्टकान्,
सङ्ग्रामे रिपुराजकुञ्जरघटादन्तावलीं पाटयन्।
श्रीहम्मीरमहीमहेन्द्र भवतस्तीक्ष्णोऽसिदण्डः स्फुटम्,
हेरम्बस्तरुणक्रमेलकगलस्पर्द्धी मृगाङ्कायते ॥
विघ्नव्रातसुतीक्ष्णकण्टकघटामास्वादयन् देहिनाम्,
हेरम्बस्तरुणक्रमेलकगलस्पर्द्धी मृगाङ्कायते।
दीप्यद्दन्तमरीचिवीचिनिचयज्योत्स्नाभिरुल्लासयन्,
कल्याणाम्बुनिधिं विपक्षकमलोल्लासञ्च विलासयन् ॥
मग्नान्यर्कपिपासुसप्ततुरगास्यान्तर्गतानि ध्रुवम्,
गङ्गायां गगनानि सप्त गगने गङ्गास्त्रयोविंशतिः।
किञ्चैकादशरुद्रमस्तकधृतास्तन्मौलिचन्द्रान्तरे,
तावत्यः प्रतिमागताः सुविशदा नैसर्गिकी चापरा ॥
यत्सप्तर्षिकमण्डलूदरगतान्यासन्निमग्नानि तद्,
गङ्गायां गगनानि सप्त गगने गङ्गास्त्रयोविंशतिः।
रुद्रैर्भक्तिवशंवदैरुपदशैः सूरैरुपैकादशैः,
पूज्यन्ते च पृथक् पृथक् बलिशतैरावाहनेऽपि स्थिताः ॥
कस्तूरीतिलकं विसारि विलसत् सीमन्तमुक्तामणिः
वक्त्रं निन्दितचन्द्रविम्बविभवं नीलञ्च कौशेयकम्।
चोलं जालकवाससा यदभवत्तन्नोपयूनामभूत्,
जम्बूवज्जलविन्दुवज्जलजवज्जम्बालवज्जालवत् ॥
ख्यातस्त्वं फलपुष्पवृष्टिसुमनः स्वाधीनजाम्बूनदः,

क्षीणास्ते रिपुसम्पदः प्रतिदिनं मित्रोदये मोदसे ।
पान्थानां कुरुषे विलम्बनमहो ! दत्तान्तरस्तेजसाम्,
जम्बूवज्जलविन्दुवज्जलजवज्जम्बालवज्जालवत् ॥
नित्यं भात्यलकानुबन्धमधुरा भालस्थली सुभ्रुवः,
तारुण्यं विलसन्मदाविलसुरो नक्षत्रमालाश्रितम् ।
अङ्गं चम्पकगौरमक्षि सकलग्रामोल्लसन्मूर्च्छनम्,
गङ्गावद् गजगण्डवद् गगनवद् गाङ्गेयवद् गेयवत् ॥
कीर्त्तिस्ते विमला सदैव कमला भृङ्गैरियं सेव्यते,
शून्यं शत्रुकुलं तव क्षितिभृतो भेत्ता भवांश्छन्नितः ।
चारित्रं भरतानुयायि भवतो हम्मीर ! पृथ्वीपते !
गङ्गावद् गजगण्डवद् गगनवद् गाङ्गेयवद् गेयवद् ॥
बन्धं क्वापि कदापि चानुभवतो मोक्षश्च तन्मानसे,
तोषं वर्द्धयतः सदा सुमनसां नीचैः स्थितिं कुर्वतः ।
श्रीमत्पुष्पकवासलब्धयशसस्तस्मादनन्तर्हितः,
पानीयस्य दशाननस्य कवरीभारस्य तुल्यक्रमः ॥
पक्षव्योमविहारदक्षमसमश्रीनीलकण्ठाश्रयम्,
कृष्णामित्रसमं दया खलु महाकालं घनं कुर्वतः ।
सोत्कम्पानिमिषेक्ष्यमाणविलसत्सत्पुष्पकश्रीजुषः,
पानीयस्य दशाननस्य कवरीभारस्य तुल्यः क्रमः ॥
निःपीतो मुनिनार्णवश्चिरमभूत्पङ्कावशेषोऽभितः
सुष्कोरःस्थलतामवाप पवनप्रोद्धूतधूलीमयः ।
गङ्गे ! देवि ! भवत्प्रवाहकृपया भूयः प्रगीतो जनैः,
अम्भोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥
इन्दुर्वारणरत्नमग्निमणयः श्रीः पारिजातः सुधा
धनं स्वर्णपरिच्छदोऽयमजनि त्वत्तः सुरैः प्रार्थितात् ।
धिग् मौर्ख्यं तव यस्तथापि तनुते तोयाढ्यनामापनीम्,

अम्भोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः॥
शय्या-सद्म हरेः श्रियो जनयिता रत्नाकरो नायकः,
तीर्थानामिति सागरस्य कथया नासौ तथा तुष्यति।
अम्भोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः,
श्रुत्वैतानि पदानि तुष्यति यथा तर्षार्त्त-कण्ठो ज्वरी॥
पाथोधेर्मन्थकाले सुरहृतममृतं लब्धमर्काब्जिजाभ्याम्
स्वर्भानुस्त्रायमानं कपट-पटु-शिवश्छिन्नमूर्द्धाऽच्युतेन।
चक्रे सोमस्य वाक्यादिति भुवि लुठितं भर्त्तृशोकार्त्तचित्ताः,
श्लिष्यन्ति स्कन्दपत्न्यो विधुभयविधुरं राहुवक्त्रोऽधुनापि॥
अस्मिन् पाथोधि-मन्थेऽमृत-हरण-रुषा शौरिणा भिन्नमौलि·
श्लिष्यन्ति स्कन्दपत्न्यो विधुभयविधुरं राहुवक्त्रोऽधुनापि।
श्यामं शोकार्त्तनादास्तडिदमलरुचो मेघमाशङ्क्य तत् ते,
धत्ते नृत्यं मयूरः प्रमुदितहृदयः पातु वागित्युमायाः॥
वस्त्राभावोऽनुबिम्बे नयनकमलयो राजयः कण्टकानाम्,
अस्ति स्तः सन्ति कान्ताकुचकलशतटे नास्ति नस्तो न सन्ति।
चित्रं श्रीखण्डहारी प्रियतमकरजोज्जागरूक-व्रणानि,
त्वद्वैरि-क्ष्मापतीनामखिल वसुमतीकान्त कान्तारमार्गे॥
प्रत्येकं दिक्पतीशाऽनिलतपनवसून् सन्नतस्त्वं यथा भूः,
अश्रौषीस्त्वं यया च स्वरसहितलसन् मूर्च्छना-ग्रामतालान्।
कृष्णान्यस्तान्यमौलीच्चणवदवसरे सा च सा च प्रमादात्
शीर्षाणां सैव बन्ध्या तव नवतिरभूल्लोचनानामशीतिः॥

इति श्रीमहाकविदेवेश्वरविरचितायां
कविकल्पलतायामर्थाख्ये चतुर्थे स्तवके
समस्यानाम सप्तमं कुसुमम्।

---

## अथ ग्रन्थकृद्विज्ञापनम् ।

न कवित्वाभिमानेन न कीर्त्तिप्रसरेच्छया ।
विहिताऽसौ मया किन्तु कौतुकात् कवितार्थिनाम् ॥
निष्फला लसतां त्यक्ता कविकल्पलता मम ।
एषा फलाय महते पोषणीया मनीषिभिः ॥
अन्यकन्यापि पुण्यार्थमपविद्धाऽपि शर्मदा ।
पोषणादेवमेषापि श्रेयसे च भविष्यति ॥

## अथ ग्रन्थस्तुतिः ।

हन्त ! सन्ततमिमामुपास्यतः कस्य नश्यति न वाचि वाच्यता ?
उल्लसन्ति कलकण्ठकामिनो कूजितादपि च पूजिता गिरः ॥
कलकण्ठकलत्रकोमलस्वन-लक्ष्मीसहया सुकेलयः ।
कविकल्पलतानुकम्पया कविनः कस्य भवन्तु नोक्तयः ? ॥
निसर्ग-सारस्वतसम्भृतानि सूक्तानि मुक्तामणिकोमलानि ।
भवन्त्यसुख्या भजतां तदेषा द्वेषादुपेक्ष्या न विचक्षणेन ॥
स्वर्धेनुदुग्धसवयांसि वचांसि वाणी-
मञ्जीरमञ्जुलनिनादसहोदराणि ।
एतान्निषेव्य कवयः कवितामृतानि ।
विद्वत्सभासु स विलासमुदीरयध्वम् ॥
मदकलकलकण्ठीकेलिनादानुवादाः
परिणतसहकारास्वादसवादभाजः ।
अभिनवमधुधाराबन्धवः काव्यबन्धा-
विधुतविधुरुचोऽस्याः सेवयाविर्भवन्ति ॥
सर्वं विनश्यति विहाय कवित्वमेकं
कायेन साकमिति कस्य नहि प्रसिद्धम् ।
एतद्विमृश्य कविकल्पलता सुकाव्य-
सम्पत्तये सुकविभिः सततं निषेव्या ॥

आविष्कृता वसुमती बलयेश्वरेण,
देवेश्वरेण कविना कविनायकेन।
काव्यज्ञमानसमुदे सकलार्थ-सूतिः,
सत्सूनगुच्छ 'कविकल्पलता' विभूयात् ॥

इति श्रीमहाकविदेवेश्वरविरचिता कविकल्पलता
समाप्ता।

श्रीशप्रमाणेऽलिगते दिनेशे
शाकेऽनिलेन्द्रप्रमिते बुधाह्ने।
श्रीशप्रसादात् सुधिया मुदे मे।
संमुद्रितेयं प्रकटीकृता च ॥

--:•:--

# श्रीरामगोपाल कविरत्न प्रकाशित पुस्तकानि ॥

# वाग्भटालङ्कारः ।

( वाग्भटकृतोलंकारग्रंथः )

प्राचीनटिप्पनसमेतः ।

ग्रन्थोयं

श्रीकृष्णदासात्मजखेमराजेन

मुंम्बय्यां

स्वकीयेश्रीवेंकटेश्वरयंत्रालये

मुद्रितः ।

शके १८१६ संवत् १९५१

# वाग्भटालङ्कारः।

## प्रथमःपरिच्छेदः।

श्रीर्जयति॥ श्रियं दिशतु वो देवः श्रीनाभे
योर्जिनस्सदा॥मो[१]क्षमार्गं सतां ब्रूते यदा
गमपदावली ॥ १ ॥ सा[२]धुशब्दार्थसंदर्भं
गुणालंकारभूषितम् ॥ स्फुरतीतिरसो
पेतं काव्यं कुर्वीत कीर्तये ॥ २ ॥ प्र[३]ति
भा कारणं त[४]स्य व्यु[५]त्पत्तिस्तु विभूष
णम् ॥ भृशोत्पत्तिकृदभ्या[६]स इ[७]त्यादिक
विसंकथा॥३॥ प्र[८]सन्नपदनव्यार्थयुक्त्युद्बो
धविधायिनी ॥ स्फुरंती सत्कवेर्बुद्धिः

---

१ यत्सिद्धान्तग्रंथपरंपरायस्यग्रंथपदावली सतां साधूनांमोक्षमार्गंब्रूते. अन्यापि पदावली मार्गं कथयते। २ वाऽस्यप्रयोजनवत्त्वमित्याह साध्विति। ३ प्रतिभाकोर्थः विविधशास्त्रज्ञानम् यद्वा प्राग्जन्मसंस्कारजन्यापूर्वापरानुसंधानरूपाबुद्धिः प्रतिभा। ४ काव्यस्य। ५ विविधशास्त्रज्ञानं। ६ अभ्यासः शीघ्रोत्पादनकर्त्ताभवति। ७ इत्यादि सर्वं कवीनां वार्त्ता शिक्षावा। ८ प्रसन्नेति सुललितपदनवीनार्थयुक्तिप्रकाशकारिणी।

प्रतिभा[1] सर्वतोमुखी ॥४॥ शब्दधर्मार्थका-
मादिशास्त्रेष्वाम्नाय[2]पूर्विका ॥ प्रतिपत्ति[3]र-
सामान्या व्युत्पत्ति[4]रभिधीयते ॥ ५ ॥
अनारतं गुरूपांते यः काव्ये रचनादरः ॥
तमभ्यासं विदुस्तस्य क्रमः कोऽप्युपदि-
श्यते ॥ ६ ॥ बिभ्रत्याबंधचारुत्वंपदाव-
ल्याऽर्थशून्यया ॥ वशीकुर्वीत काव्याय
छन्दांसि निखिलान्यपि ॥७॥ पश्चाद्गुरुत्वं
संयोगाद्विसर्गाणामलोपनम् ॥ विसंधि-
वर्ज्जनं चेति बंधचारुत्वहेतवः ॥८॥ यथा ॥
शिते कृपाणे विधृते त्वया घोरे रणे कृते ॥
न्त्र[5]धीश क्षितिपा भीता वनएव गता ज-

---

१ प्रज्ञानवनवोन्मीलदित्यादिलक्षणलक्षिता सर्वत्रावगाहिनी सत्कवेर्बुद्धिः प्रतिभा स्यादित्यर्थः । २ गुरुसम्प्रदायपूर्विका। ३ परिज्ञानम् । ४ व्याकरणसंहितादण्डनीतिवात्स्यायनादिए तेषुज्ञानं व्युत्पत्तिभर्वति । ५ न्त्रधीशेतीत्थं संयोगो न क्रियते वने एव इति विसंधिर्ज्ञेयः गता अत्र विसर्गाणांलोपनं कृतं इत्थं न क्रियते नूतनकवित्वे इतिभावः असंयोगेऽधीशेति गुरुः क्षितिपा भीता गता इति विसर्गलोपः ।

वातु ॥९॥ अनुल्लसत्यां नव्यार्थयुक्ताव
भिनवत्ववतः ॥ अर्थसंकलनात्तत्त्वं[1]मभ्यसे-
त्संक[2]थास्वपि ॥१०॥ यथा ॥ आगम्यतां
सखे गाढमालिंग्यात्र निषीद च ॥ संदिष्टं
यन्निजभ्रातृजायया तन्निवेदय ॥ ११ ॥
परार्थबंधाद्यस्तु स्यादभ्यासो वाच्य-
संगतौ ॥ स न श्रेयान्यतोनेन कविर्भ-
वति त[3]स्करः ॥ १२ ॥ परकाव्यग्रहोऽ
पि स्यात्समस्यायां गुणः कवेः ॥ अर्थं
तदर्थानुगतं नवं हि रचयत्यसौ॥१३॥
मनः[4]प्रसत्तिः प्रतिभा प्रातःकालेऽभियो
गि[5]ता ॥ अनेकशास्त्रदर्शित्वमित्यर्था-
लोकहेतवः ॥ १४ ॥ समासमिव पूर्वा-

---

१ तत्त्वंकोऽर्थः अर्थप्रयोजनस्वरूपम् । २ संकथासु कोर्थः वार्त्तास्वपि । ३ तदुक्तं– परस्यकाव्यं स्वमिति ब्रुवाणो विज्ञायते ज्ञैरिह काव्यचौरः ॥ विलोक्य माणिक्यमयोग्यहस्ते प्रत्येति को नाम यदेतदस्येति । ४ मनःप्रसन्नता चित्तायत्तं धातुबद्धं शरीरं नष्टे चित्ते धातवोयांतिनाशम् ॥ तस्माच्चित्तं सर्वथा रक्षणीयं स्वस्थेचित्ते बुद्धयः प्रस्फुरंति अत्रायमभिप्रायः चित्तं स्वस्थं विधाय काव्यरचनां रचेदिति भावः । ५ उद्यमः ।

द्धे कुर्य्यादर्थप्रकाशनम् ॥ तत्पुरुषो बहुव्रीहिर्न मिथः प्रत्ययावहौ ॥ १५ ॥ एकस्यैवाभिधेयस्य समासं व्यासमेव च ॥ अभ्यसेत्कर्तुमाधानं निःशेषालंक्रियासु च ॥ १६ ॥ स्यादनर्द्धान्तपादांतेप्यऽशैथिल्ये लघुर्गुरुः ॥ पादादौ न च वाक्याश्चादयः प्रायशो बुधैः ॥ १७ ॥ भुवनानि निबध्नीयात् त्रीणि सप्त चतुर्द्दश ॥ अप्ययद्दृश्यां सितां कीर्तिमकीर्तिं च हृतोऽन्यथा ॥ १८ ॥ वारणं शुभ्रमिन्द्रस्य चतुरः सप्त वाऽबुधीन् ॥ चतस्रः कीर्त्तयेद्वाऽष्टौ दश वा ककुभः क्वचित् ॥ १९ ॥ यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित् ॥ डलयोः रलयोर्वाऽपि णनयोरपि कुत्रचित् ॥ २० ॥ नाऽनुस्वारविसर्गौ तु चित्रभं-

१ संदेहजनकौ । २ अतोद्वितीयपादांततृतीयपादयोः संधिर्नकार्य्यः अशैथिल्ये सति अपिशब्दात् द्वितीयचतुर्थपादांते लघुर्गुरुर्भवत्येव ।

गाय संमतौ॥यमकोदाहरणं–शंकमानै-
मैहीपाल[1] कारागारे विडंबनं[2] ॥ त्वद्वैरि-
भिःसपत्नीकैः[3] श्रितं बहुविडंबनम्॥२१॥
श्लेषोदाहरणम् ॥ त्वया दयार्द्रेण विभो
रिपूणां न केवलं संयमिता[4] श्च बालाः ॥
तत्कामिनीभिश्च वियोगिनीभिर्मुहुर्म-
हीपाल विधूसरांगाः ॥ २२ ॥ देव युष्म
द्यशोराशिं श्रोतुमेनं जडात्मकम् ॥
उत्कंठयतिमां भक्तिरिन्दुलेखेव साग-
रम् ॥ २३ ॥ चित्रोदाहरणम् ॥ चन्द्रडितं[5]
चट्टुलित[6]स्वरधीतसारररत्नासनं रभसक
लिपतशोकजातम् ॥ ... पापति
मिरक्षयकारकायमल्पेतरामलतपः क-
चलोपलोचम् ॥ २४ ॥ भावकानमनम
त्तेभमग्नमायातमःप्रभ ॥ विनयात्त्वां
स्तवे वीर विनतत्रिदशेश्वर ॥ २५ ॥

---

१ हे राजन् । २ अत्रबवयोर्डलयोरैक्यम् । पक्षे बहूनिपत्रेत्यर्थात् । ३ सस्त्रीकैः त्वच्छत्रुभिः । ४ अत्ररलयोरैक्यम् । ५ चन्द्रेडितंचात्रडलयोरैक्यमति । ६ चट्टुलितं स्वरापठितं बलस्येंद्रस्य रत्नासनं येन ।

हारबन्धश्चित्रम् ॥ प्रचण्डबलनिःकाम प्रकाशितमहागम ॥ भावतत्त्वनिधे देव भालमत्राऽद्भुतं तव ॥ २६ ॥ छत्रबंधश्चित्रम् ॥ जनस्यनयनस्थानध्वानमेनं छिनत्त्विनः ॥ पुनः पुनर्जिनः पीनज्ञानध्यानघनस्सनः ॥ २७ ॥ गोमूत्रिकाषोडशदलपद्मबंधावेकस्मिन्नेव ॥ अधीत्य शास्त्राण्यभियोगयोगादभ्यासवश्यार्थपदप्रपंचः ॥ तं तं विदित्त्वा समयं कवीनां मनःप्रसत्तौ कवितां विदध्यात् ॥ २८ ॥ इति वाग्भटालंकारे प्रथमः परिच्छेदः १

---

## द्वितीयःपरिच्छेदः ।

संस्कृतं१प्राकृतं२तस्याऽपभ्रंशो३भूतभाषितम् ४ ॥ इति भाषाश्चतस्रोऽपि यांति काव्यस्य कायताम् ॥ १ ॥ संस्कृतं स्वर्गिणां भाषा शब्दशास्त्रेषुनिश्चिता । प्राकृतं तज्ज[2]तत्तुल्यं देश्या[3]

---

१ संकेतं । २ तस्मात्संस्कृताज्जातं शुद्धप्राकृतमित्यर्थः । ३ शूरसेनी मागधीच ।

दिकमने कथा ॥२॥ अपभ्रंशस्तु यच्छुद्धं तत्तद्देशेषु भाषितम् ॥ यद्भूतैरुच्यते किञ्चित्तद्भौतिकमिति स्मृतम् ॥ ३ ॥ छन्दोनिबद्धमच्छन्द इति तद्वाङ्मयं द्विधा ॥ पद्यमाद्यं तदन्यत्तु गद्यं[1] मिश्रं च तद्द्वयम् ॥ ४ ॥ अदुष्टमेव तत्कीर्त्यै स्वर्गसोपानपङ्क्तये ॥ परिहार्य्यांनतो दोषांस्तानेवाऽऽदौ प्रचक्ष्महे ॥५॥ अनर्थकं१ श्रुतिकटु[2]२ व्याहतार्थ३ मलक्षणम् ४॥ स्वसंकेतप्रक्लृप्तार्थं५ मप्रसिद्ध६ मसंमतं७ ॥६॥ ग्राम्यं८ यच्च प्रजायेत पदं तन्न प्रयुज्यते ॥ क्वचिदि[3]ष्टा च विद्वद्भिरेषामप्यपदोषता ॥ ७ ॥ युग्मम् ॥ प्रस्तुतेऽनुपयुक्तं यत्तदनर्थकमुच्यते ॥ यथा विनायकं वन्दे लम्बो

---

१ गद्यपद्यमयंचंपूकथादि गद्यपद्यमयीवाणी चंपूरित्यभिधीयते ॥ यद्वा संस्कृतप्राकृतयोर्द्वयं नाटकादिमिश्रं । २ यत्पदमनर्थकंजायेत श्रुतिकटु कर्णकटु जायेत इति प्रत्येकं सम्बन्धः । ३ अनुकरणादौ इत्यर्थः ।

दरमहं हि तु ॥ ८ ॥ निष्ठुराक्षरमत्यन्तं बुधैः श्रुतिकटुस्मृतम् ॥ एकाग्रमनसा मन्ये त्वष्ट्रेयं निर्मिता यथा ॥ ९ ॥ व्याहतार्थं यदिष्टार्थ[1]बाधकार्थांतराश्रयम् ॥ रतस्त्वमेव भूपाल भूतललोपकृतौ[2] यथा ॥ १० ॥ शब्दशास्त्रविरुद्धं यत्तदलक्षण[3]मुच्यते ॥ मानिनीमानदलनो यथेन्दुर्विजयत्यसौ[4] ॥ ११ ॥ स्वसंकेतप्रक्लृप्तार्थं गम्यार्थांतरवाचकम् ॥ यथा विभाति शैलोऽयं पुष्पितैर्वानरध्वजैः[5] ॥ १२ ॥ यस्य नास्ति प्रसिद्धिस्तदप्रसिद्धं विदुर्यथा ॥ राजेन्द्र भवतः कीर्तिश्चतुरो[6] हं

---

१ इष्टार्थस्य विरुद्धं यदर्थान्तरं तदाश्रयभूतमित्यर्थः । २ अत्र कमलभूतलोपकारे त्वनवरत इष्टार्थे भूतानां प्राणिनां लोपो मरणं तत्कारणं विरुद्धोऽर्थः इति प्रतीयते । ३ व्याकरणलक्षणहीनमित्यर्थः । ४ विजयतीत्यत्रविपराभ्यांजेः आत्मनेपदविधायकसूत्रहीनमित्यर्थः । ५ अर्ज्जुनवृक्षैः । अत्रवानरध्वजपदं अर्ज्जुनवृक्षप्रतिपादकतया प्रयुक्तं वानरध्वजशब्दस्तु पांडवमर्ज्जुनं प्रतिपादयाति कविरेवं स्वसंकेतप्रक्लृप्तार्थंपदं कवितायां नप्रयुंजीत इति तात्पर्य्यम् । ६ चतुरस्समुद्रान्प्रतिहंति गच्छति हंतीति अत्र गमनार्थे अप्रसिद्धमेतत् ।

ति वारिधीन् ॥ १३ ॥ शक्तमप्यर्थमाख्यातुं यन्न सर्वत्र संमतम् ॥ असंमतं तमोंभोज[1] क्षालयंत्यंशवो रवेः ॥ १४ ॥ यद्यत्राऽनुचितं तद्धि तत्र ग्राम्यं स्मृतं यथा ॥ छादयित्वा[2] सुरान्पुष्पैः पुरो धान्यं क्षिपाम्यहम् ॥ १५ ॥ पदात्मकत्वाद्वाक्यस्य तद्दोषास्तत्र संति हि ॥ अपदस्थास्तु[3] ये वाक्यदोषास्तान् ब्रूमहेऽधुना ॥ १६ ॥ खंडितं व्यस्तसंबन्धमसंमतमपक्रमम् ॥ छन्दोरीतियतिभ्रष्टं दुष्टं वाक्यमसत्क्रियम् १७॥ वाक्यांतरं प्रवेशेन विच्छिन्नं खण्डितंमतम् ॥ यथा पातु[4] सदास्वामी यमिन्द्रः स्तौति वो जिनः॥१८॥सम्बन्धपददूरत्वे व्यस्तसंबंधमुच्यते ॥ यथाऽऽद्यः[5] सम्पदं ज्ञाता देयात्तत्वानिवोऽर्हताम् ॥ १९ ॥

---

१ अत्राम्भोजशब्दः अंभसोजातमित्यर्थे कमलेपि संमतो न पंकेऽव्युत्पत्यादिना। २ छादयित्वेति अनुचितं रंजयित्वा इतियोज्यम्। ३ पदेष्ववर्त्तमानाः। ४ अत्रजिनः स्वामी पातु इति वाक्यमंतराले स्तौति इतिवाक्यमंतरेण विच्छिन्नम्। अर्हतामाद्यः श्रीवृषभो देवः संपदं देयादिति पदानांदूरता।

शब्दार्थौ यत्र न तुलाविधृताविव संमतौ॥ तदसंमतमित्याहुर्वाक्यंवाक्यविदोयथा ॥२०॥ मानसौकः[1] पतद्यानदेवासनविलोचनः ॥ तमोरिपुविपक्षारिप्रियां दिशतु वो जिनः ॥ २१ ॥ अपक्रमं भवेद्यत्र प्रसिद्धक्रमलङ्घनम् ॥ यथा भुंक्त्वा कृतस्नानो गुरून्देवांश्च वंदते॥२२॥ छन्दश्शास्त्रविरुद्धं यच्छन्दोभ्रष्टं तु तद्यथा ॥ स जयति[2] जिनपतिः पर ब्रह्ममहानिधिः ॥ २३ ॥ रीतिभ्रष्ट[3]मनिर्वाहो यत्र रीतेर्भवेद्यथा । जिनो जयति सश्रीमान्निन्द्राद्यमरव-

१ मानसंसरस्तद्गृहं यस्यसचासौपतत्त्वसहंसः यानंवाहनं यस्यसः ब्रह्मासचासौ देवश्चतदासनं पद्मं तद्वद्विलोचने यस्य सस्तमोरिपुः सूर्यः तद्विपक्षोराहुः तस्यारिःकृष्णः तस्यप्रिया लक्ष्मीः तां दिशतु ददात्वित्यर्थः । २ सजयति अत्र श्लोक लक्षणं तृतीयपदेनास्ति अतश्छन्दोभ्रष्टमित्यर्थः श्लोकेषष्ठं गुरु ज्ञेयं सर्वत्र लघु पंचमम् इतिश्लोकलक्षणम् । ३ आरब्धरीतेरभावः जिन इत्यादावसमासाद्वैदर्भीरीतिः प्रथमपादे तुद्वितीये तुसमासाद्गौडी ।

न्दितः ॥ २४ ॥ [1]पदांतविरतिः प्रोक्तं यतिभ्रष्टं बुधै र्यथा ॥ नमस्तस्मै जिनस्वामिने [2]सदा नेमयेऽर्हते ॥ २५ ॥ सत्क्रियापदहीनं यत्तदसत्क्रियमुच्यते ॥ यथा सरस्वतीं पुष्पैः श्रीखंडैर्घुसृणैः[3] स्तवैः ॥ २६ ॥ देशकालागमावस्थाद्रव्यादिषु विरोधिनम्॥वाक्येष्वर्थं न बध्नीयाद्विशिष्टं कारणं विना ॥ २७॥ प्रवेशे चैत्रस्य [4]स्फुटकुटजराजिस्मितादिशिप्रचंडे मार्त्तण्डे हिमकणसमानोष्म मह-

---

१ पदं विभक्त्यंतंपदं तन्मध्ये तन्मध्ये विरतिः विरामः अत्र जिनस्वामिने इतिपदमध्ये विरतिः क्रियते एवं कविः नकुर्वीत इति तात्पर्य्यार्थः ॥ यतिभ्रष्टमिदं । २ नेमिनाथाय ३ क्रियापदहीनं काव्यं न कुर्य्यात् यथा सरस्वती मितिवत्. अस्मिन् श्लोके क्रियानवर्त्तते स्निग्धैः सचिक्कणैः स्तवैः स्तुवीतइत्यध्याहारः । ४ स्फुटकुटजराजीति कालविरुद्धमेतत् हिमकणेतिद्रव्यविरुद्धमेतत् ।

सि ॥ जलक्रीडायांतं मरु[1]सरसि बालद्विपकुलं मदेनांधं विध्यंत्यसमशरपातैः प्रशमिनः ॥ २८ ॥ तवाऽरिनारीनयनाश्रुवारिभिर्नरेन्द्रानिर्मूलितपत्रवल्लिभिः॥सरांसि सत्कज्जलयुग्जलाविलक्षितीन्यजायंत मरुस्थलीष्वपि ॥ २९ ॥ तस्य जन्मन्यकालेऽपि तरूणां स्कंधपुष्पिणाम् ॥ ससंभ्रमदृशो रूपं ददृशु र्वन देवताः ॥ ३० ॥ अनारतमधीयानद्विजसंनिधिवर्त्तिनः ॥ यत्राऽस्फूटपदं वेदमुद्गिरंतिस्तनंधयाः ॥ ३१ ॥ जनार्दन एव दृष्ट्वा मंगलदीपे निपततः शलभान् ॥ करुणामुकुलितनयनो वनूतपक्षः श्रीजिनो जयति ॥ ३२ ॥ तदामये दाहमतीत्य देहे स्त्रीणां दधुश्चन्दनबिन्दवोऽपि ॥ स्नेहाकुलस्य ज्वलनाय तोयं न तस्य

---

१ निर्ज्जलदेशेतडागासंभवत्वात् मरुसरसीति देशविरुद्धमेतत् मरुर्न्निर्ज्जलदेशः निर्ज्जलदेशतडागे जलक्रीडायान्तं कोऽर्थः जलक्रीडासक्तं रतमिति यावत् बालद्विपकुलमितिमदेनान्धमित्यवस्थया विरोधः प्रशमिनः संयमिनः पुरुषाः असमशरपातैः विषमबाणपातैः बालद्विपकुलं बालहस्तिसमूहम् विध्यंति इत्यागमाविरोधः कविरेवं वाक्यं नबध्नीयादितिभावः ।

कालस्य च दृष्टमेव ॥ ३३ ॥ इति[1] दोष विषनिषेकैरनंकितमुज्ज्वलं सदा वि-बुधैः ॥ कविहृदयसागरोत्थितममृत मिवाऽऽस्वाद्यते काव्यम् ॥ ३४ ॥ इति वाग्भटालंकारे द्वितीयः परिच्छेदः॥२॥

---

## तृतीयःपरिच्छेदः ।

अदोषावपिशब्दार्थौप्रशस्येते न यैर्वि-ना॥तानिदानीं यथायुक्ति ब्रूमोऽभिव्यक्त ये गुणान्॥१॥औदार्य्यं १ समता२ कांति ३ रर्थव्यक्तिः ४ प्रसन्नता५॥समाधिः६ श्ले-ष७ ओजो८ऽथ माधुर्य्यं९ सुकुमारता १० ॥ २ ॥ पदार्थानामर्थचारुत्वप्रत्यायकप-दान्तरैः ॥ मिलितानांयदाधानं तदौदा र्य्यं स्मृतं यथा ॥ ३ ॥ गंधभं[2]विभ्राजितधा

---

१ इत्येवं पूर्वोक्तायें दोषास्तेएव विषंतस्य निषेकैः सिंचनै रनंकितं नचिह्नितं कविहृदयसमुद्रोत्पन्नं काव्यं विबुधैः पंडि-तैरमृतमिव आस्वाद्यते सदाऽतिस्वादुत्वेन गृह्यते यथा स्वादुपदार्थं अतिप्रेम्णा भुज्यते जनैरस्मिन्नलोके एवमेव नि र्दोषं काव्यमपि । २ अत्र गंधशब्देनेभानांलीलाशब्देनाम्बुजस्य चारुत्वं प्रतिपादितम् ।

मलक्ष्मीलीलाम्बुजच्छत्रमपास्य राज्यम् ॥ क्रीडागिरौ रैवतके तपांसि श्रीनेमिनाथोऽत्र चिरं चकार ॥ ४ ॥ बंधस्य पदवैषम्यं समता सोच्यते बुधैः ॥ यदुज्ज्वलत्वं तं[1]स्यैव सा कांतिरुदिता यथा ॥ ५ ॥ कुचकलशविसारिस्फारि लावण्यधारामनुवदति यदंगासंगिनी हारवल्लिः ॥ असदृशमहिमानं तामनन्योपमेयां कथय कथमहंते चेतसि व्यं[2]जंयामि ॥ ६ ॥ फ[3]लैः कृताहारः प्रथममपि निर्गत्यसदनादनासक्तःसौ[4]ख्ये क्वचिदपि पुराजन्मनि कृती ॥ तपस्यन्नश्रांतं ननु वनभुवि श्री[5]फलदलैरखंडैः खंडेन्दोश्चिरमकृतपादार्चनमसौ ॥ ७ ॥ पदमे[6]यत्वमर्थस्य ह्यर्थव्यक्तिः स्मृता यथा ॥ त्वत्सैन्यरजसा लुप्ते सूर्य्ये रा

---

जलक्रीडास...वैव । २ प्रकटीकरोमि । ३ कांतेरुदाहरणमाह ।
वस्थया विरोध.
विषमबाणपातैः बाल. ५ बिल्वपत्रैः । ६ यत्रोक्तोप्यर्थोबलात्कथं
गमाविरोधः कविरेवं वक्तिः ।

र्भूर्दिवा ॥ ८ ॥ झटित्यर्थार्थकत्वं यत्प्रसत्तिः सोऽच्यते यथा ॥ कल्पद्रुमइवाऽऽभाति वांछितार्थप्रदो गुरुः ॥ ९ ॥ स समाधिर्यदन्यस्य गुणोऽन्यत्र निवेश्यते ॥ यथा श्रुतिररिस्त्रीणां राज्ञःपल्लवितं यशः ॥ १० ॥ श्लेषो यत्र पदानि स्युःस्यूतानीऽव परस्परम् ॥ ओजस्समासभूयस्त्वं तद्गद्येष्वेव सुन्दरम् ॥ ११ ॥ उत्श्रा यस्योऽद्गीतं सह सहच[illegible]भासोक्ति मुहुः श्रुत्वा हेलोद्[illegible] [illegible]तिशक्तेः १९ समाजबलं ॥ दरोद्गच्छद्भा[illegible] २१ यथासंत्पुलकिताश्चमत्कारोद्रेकं [illegible] ण स्तेऽपि दधिरे ॥ १२ ॥ समरा[illegible] २४॥ [illegible]रिनरेशकरिनिकरशिरः सरसा[illegible]श्ले[illegible]रपरिचयेनेवारुणितकरतलो देवइति गद्यम् ॥ १३ ॥ सरसार्थपदत्वं यत्तन्माधुर्य्यं मिहोऽच्यते ॥ अनिष्ठुराक्षरत्वं

---

१ लताधर्मः पल्लवनं यशसिनिवेश्यते । २ गंधेरोजोगुणमुदाहराति ।

यत्त त्सौकुमार्य्यमिदं यथा ॥१४॥ फणि मणिकिरणालीस्यूतचञ्चन्निचोलः कुचकलशनिधानस्येव रक्षाधिकारी ॥ उरसि विशदहारस्फारतामुज्जिहानः किमिति करसरोजे कुंडली कुंडलिन्याः ॥ १५ ॥ प्रतापदीपांजनराजिरेवः देव त्वदीयः करवाल एषः ॥ नोचेदनेन द्विषतां ध्वजंयांसि श्यामायमानानि कथं कृतं ... तोऽनुममपि निर्गत्यसौमिव दाम रम्यम् ॥ ... चिऽदपि पुंस कंठपीठे करोत्यलंकारतश्रांतं न्त्वम् ॥ १७ ॥ ❀ ॥ इति वाग्भखंडेलकारे तृतीयः परिच्छेदः ॥ ३ ॥

---

१ माधुर्य्यमुदाहरति पद्मावत्याः देव्याः करसरोजे कुंडली सर्पः किमिति किमर्थमित्यर्थः किम्भूतः फणइत्यादि तस्यूतः प्रोतः चंचत्प्रधानं निचोलः कंचुकोयेन हृदि निर्मल हारवद्विस्तीर्णतां प्राप्तवान् भवेत् तदा तादृशनिधानस्यरक्षाषमधिकारीच स्यादत्र पदानामर्थसरसत्वान्माधुर्य्यम् १५ । मावरोधःमाधुर्य्यमुदाहरति ।

दोषैर्मुक्तं गुणैर्युक्तमपि येनोज्झितंवचः॥
स्त्रीरूपमिव नो भाति तं ब्रुवे लंक्रियो
च्चयम्॥ १ ॥ चित्रं १ वक्रोक्त्य २ नुप्रासौ ३
यमकं ४ ध्वन्यलंक्रिया॥ अर्थालंकृतयो
जाति १ रुपमा २ रूपकं ३ तथा ॥ २ ॥
प्रतिवस्तूपमा ४ भ्रांतिमाना ५ऽऽक्षेपो ६
ऽथ संशयः ७॥ दृष्टांत ८ व्यतिरेकौ ९
वाऽपह्नुति १० स्तुल्य योगिता ११ ॥३॥
उत्प्रेक्षा १२ ऽर्थांतरन्यासः १३ समासो
क्ति १४ र्विभावना १५॥दीका १६ ऽतिश-
यौ १७ हेतुः १८ पर्य्यायोक्तिः १९ समा-
हितम् २० ॥ ४ ॥ परिवृत्ति २१ र्यथासं-
ख्यं २२ विषमः २३ ससहोक्तिकः २४॥
विरोधो २५ वसरः २६ सार २७ स्सश्ले-
षश्च २८ समुच्चयः २९ ॥ ५ ॥ अप्रस्तुत-
प्रशंसा ३० स्यादेकावल्य ३१ ऽनुमा
ऽपि ३२ च ॥ परिसंख्या ३३ तथा प्रश्नो-

---

१ अलंकारादिभिः औदार्य्यादिभिः। २ चतस्रश्चित्राद
यश्शब्दालंक्रियाः। ३ जात्यादयोऽर्थाऽलंकाराः।

त्तरं ३४ संकर ३५ एव च ॥ ६ ॥ यंत्रां ग-
संधितद्रूपैरक्षरैर्वस्तुकल्पना ॥ सत्यां
प्रसत्तौ तच्चित्रं तच्चित्रं चित्रकृच्चयत्॥७॥
जनस्य नयनस्थानध्वान्तमेनश्छिन
त्विनः ॥ पुनः पुनर्ज्जिनः पीनज्ञानध्यान[1]
घनस्स नः ॥ ८ ॥ षोडशदलपद्मं चित्रं
गोमूत्रिका० गणनरगणवरकरतरच्चरण
परपदशरणगजनपथकथक ॥ अमदन
गतमदगजकरयमल शममय जय
भयघनवनदहन ॥ ९ ॥ एकस्वर चि-
त्रम् ॥ मूलं[2] स्थितिमधः कुर्वन् पौत्रैर्जुष्टो
गताक्षरैः ॥ विटः सेव्यः कुलीनस्य ति-
ष्ठतः पथि कस्य च॥१०॥विटपदादिका-
रमात्राच्युतकम् ॥ धर्माधर्मविदः साधु
पक्षपातसमुद्यताः ॥ गुरूणां वंचेने निष्ठा
नरके यांति दुःखिताः॥११॥वंचनपदाद्धि

---

१ यत्राऽर्थालंकारे अंगैरवयवैः संधिभिः संधानैश्चतद्रूपै रक्षरैः यत्चित्रकारि तदपि चित्रं कृत्वा वस्तुकल्पना क्रियते।
२ अवस्थां विनाशयन् मूलस्थितिमधः कुर्वन् पाताले कुर्वन्नवटः गताक्षरैः मूर्खैः पौत्रैर्वाजुष्टः सहितः ।

दुच्युतकमस्मिनञ्ज्ञेयं ॥ कंकाकुकंकके कांककेकिकोकैककुः ककः॥अकुकौकः काककाक्कतऋक्काकुकुककांककुः १२कुर्वन् दिवाकराश्लेषं दधच्चरणडम्बरम् ॥ देवयौष्माकसेनायाः करेणुः प्रसरत्यसौ १३अत्रकरेणुपदात्ककाररूपवर्णच्युतकम्॥प्रस्तुतादपरं वाच्यमुपादायोऽत्तर-प्रदः॥भंगश्लेषमुखेनाऽऽह यत्र वक्रोक्ति

---

१ समुद्रवर्णनमनेन श्लोकेन क्रियते—कंसुखंकाकुध्वनौ केन क्रामेन सुखेन वा कोकवा ध्वनिविशेषायेषांते कंसुखं यथास्यादेवं कायंतिकंकाः केकांका स्ताद्दशाः केकिनश्चते कोकाश्चऋवाका स्तैरेका अद्वितीयाकुर्भूमिः यस्यसः तथोक्तः केनजलेन उ-पलक्षितः कोवायुर्यत्र यद्वाकेन वायुना प्रेरितं कंजलं यस्यसः ककः समुद्रोवर्त्तते इतिशेषः यद्वा कमेव जलमेवकः आत्माय-स्यसः ककः समुद्र एव कुःकुत्सितः अकुवः शोभनाः कौकसो जलवासिनस्तेचते काकाश्चतेषां समूहः काककं स्वार्थेकः प्रत्य-यः तस्य अक्क अंबामाता यत्र समुद्रेसमुद्र एव पालनधर्मत्वान्माता यऋचो वेदवाक्यानि तेपांकाकवो वक्रोक्तयः तासांकुको गृ-हीता कुकति जल्पतिवा आदत्तेवा सञ्चासौ को ब्रह्मा सः अंके उत्संगेयस्यसः ऋक्का कुकुकांकः विष्णुः तस्यकुः स्थानं यत्रस समुद्रः कुकवृक शब्दे इति धातुः॥ २ दिवाकांक्षेनसह सुंदर श्लेषं सूर्यश्लेषं वा पादंडबंररणडबरंवा॥

रेवसा॥१४॥भंगोदाहरणम्॥नाथ[1] मयूरो नृत्यति तुरगाननवक्षसः कुतो नृत्यम्॥ ननु कथयामि कलापिनमिह[2] सुखकलापी प्रियेकोस्ति ॥ १५ ॥ श्लेषोदाहरणम्॥भर्तुःपार्वति नाम कीर्तय न चेत्त्वां ताडयिष्याम्यहं क्रीडाब्जेन शिवेति सत्यमनघे किं ते सृगालः पतिः ॥ नो स्थाणुः किमुकीलको नहिपशुस्वामी नु गोप्ता गवां दोलाखेलनकर्मणीति विजया गौर्य्या गिरः पांतुवः ॥ १६ ॥ तुल्यश्रुत्यक्षरावृत्तिरनुप्रासः स्फुरद्गुणः[3] अतत्पदः स्याच्छेकानांलाटानां[4] तत्पदश्चसः ॥ १७ ॥ अलंकलंकशृंगारकरप्रसरहेलया ॥ चन्द्र चंडीशनिर्माल्यमसि

---

१ नृत्यंतं केकिनं वीक्ष्य पतिं काचिदाह—स्यात्किन्नरः किम्पुरुषस्तुरंगवदनो मयुरित्यमरः २ कलापः पिच्छभारः अस्यास्तीति अत्र कं सुखं लपितुं शीलं यस्येति भंगः भंगेन शब्दखंडेनोभयवाचिना शब्देन । ३ औदार्य्यादि गुणाहि अनुप्रासेन दीयंते । ४ पादेनलाटानुप्रासमुदाहरति । ५ छेकानुप्रासमुदाहरति विरहिणीवचनं अलमिति ।

न स्पर्शमर्हसि ॥ १८ ॥ रणे रणविदो हत्वा दानवान् दानवद्विषा ॥ नीतिनष्टेन भूपाल भूरियं भू स्त्वया कृता ॥ १९ ॥ त्वं प्रिया चेच्चकोराक्षि स्वर्गलोकसुखेन किम् ॥ त्वं प्रिया यदि न स्या मे स्वर्गलोकसुखेन किम् ॥ २० ॥ एकत्र[1] पात्रे स्वकलत्रवक्त्रे नेत्रामृतं बिंबितमीक्षमाणः पश्चात्पपौ[2] सीधुरसं पुरस्तान्ममाद कश्चिद्यदुभूमिपालः ॥ २१ ॥ स्यात्पादपदवर्णानामावृत्तिः[3] संयुता युता ॥ यमकं भिन्नवाच्यानामादिमध्यान्तगोचरा[4] ॥ २२ ॥ दयां चक्रे दयांचक्रे सतां

---

१ अभिन्नपदश्छेकानुप्रासः भिन्नपदो लाटानुप्रास इति सर्वथा तुल्यन्याया वृत्तिरुक्ता संप्रति किंचिद्भेदैरपि वर्णानां तुल्यश्रुतत्वादनुप्रास इति दर्शयति एकत्रेति। २ इत्यनेन लाटानुप्रासः कलत्रदर्शनात् एव प्रागुन्मादं गतो मद्यं पश्चात्पपौ। ३ आवृत्तिर्द्विधा एका मिलिता संलग्ना असंलग्ना एतावद्भेदाः षड्विधमपित्रिधा एकं पादाद्यक्षरविषयं द्वितीयंपाद-वर्णमध्यविषयं तृतीयं पादप्रांतवर्णविषयं तेनाष्टाविधभिन्नार्थानां वृत्तस्य चतुर्थांशः पादः विभक्त्यंतं पदं वर्णाक्षराणामावृत्तिरभ्यासः। ४ व्यावर्त्तितः।

तस्माद्भवान्वितं ॥२३॥ चतुरक्षरच्छन्दः

यशस्ते समुद्रान्सहारोरगारेः सदाऽऽ रोरगारेः समानांगकांतेः ॥ द्विषा मुद्धतानां निहंसि त्वमिन्द्रः मुदं भोधराणामु दंभोधराणाम् ॥२४॥ षडक्षरद्वयम्

विभातिरामा परमारणस्य विभाति रामा परमा रणस्य॥ [1]सदैवतेजोर्ज्जित राजमान सदै वतेजोर्ज्जितं[2] राजमान ॥२५॥ सारं गवय्यसान्निध्य राजि काननमग्रंतः[3] सारंगवयसान्निध्यदारुणं शिखरे गिरेः ॥ २६ ॥ आसन्नदेवा नरराजराजिरुच्चै स्तटानामियमत्र नाद्रौ ॥क्रीडाकृतोयत्र दिगन्तनागा आसन्नदेवानरराजराजि

---

१ सदैवेन सभाग्येन तेजसा राजसुमानः पूजायस्यसः । २ अजोविष्णुस्तद्वदूर्ज्जितेन बलेन शोभमानं । ३ गिरिसारस्य शृंगेकाननमग्रतो भातीत्यर्थः ।

॥ २७॥ अमरनगरस्मेराक्षीणां प्रपंच यति स्फुरत्सुरतरुचये कुर्वाणानां बलक्ष-मरंहसम् ॥ इह सहसुरैरायांतीनां नरे शनगेन्वहं सुरतरुचये कुर्वाणानां वलक्ष-मरंहसम् ॥ २८ ॥ रंभारामा कुरवक कमला रंभा रामाकुरवककमला रंभारा-मा कुरवक कमला रंभारामाकुरव ककमला ॥ २९ ॥ हारीतहारी तत मेषधत्ते शेवाल शेवाल सहंसमंभः॥जंबा-लैंजं बालमलं दधानं मंदारमन्दारववा युरद्रिः॥३० ॥नेमिर्विशालनयनो नयनो दितश्रीऽरभ्रांतबुद्धिविभवो विभवोऽथ

---

१ इहनगेबाणवृक्षाणां कुर्भूमिरमरस्त्रीणां रंहसंवेगं प्रपंचयाति स्फुरंतः सुरतरूणां चयाः यत्र कीदृशीनां अरंशीघ्रं वलक्षं धव-लं हसंहास्यं कुर्वाणानां सुबोधमन्यत् । २ रंभाणां कदली नामारामेयस्यांसाकुर्भूमिः हे अवक रक्षक शोभत इति शेषः कमलानां आरंभ उत्पत्तिर्यस्यांसा रामामनोहरा नकुत्सितः र-वकः शब्दोयेषां ते तादृशा कमला हरिणायस्यां सारंभारामा अकुः अकुत्सिता पुनः अवकंबक पक्षिवर्जितं कंपानीयं मलते धारयति तथा कुरवकैः कमला शोभायस्यां । ३ जलं । ४ पंकजं । ५ नवीनं । ६ मन्दाराणां वृक्षविशेषाणां मंदारवः वायुर्यत्रस अद्रिः ।

भूयः॥प्राप्तो महाजनगरान्नगराजि तत्रसू
तेन चारुजगदेजगदेकनाथः ॥ ३१ ॥ यं[1]दु
पान्तिकेषु सर[2]लाः सरला यदनूच्चलंति
हरिणा हरिणाः ॥ तदिदं विभाति क
मलं कमलं पदमेत्य यत्र परमापरमा
॥ ३२ ॥ कांतारभूमौ पिककामिनीनां
कां तारवाचं क्षमते स्म सोढुम्॥कांतारते
शेऽध्वनि वर्तमाने कान्तारविन्दस्य मं[3]-
धोः प्रवेशे ॥ ३३ ॥ चकार साहसं युद्धेधू-
तोल्लासाहसंचया॥दैन्यंत्वांसा[4]हसंप्राप्त
द्विषां चोत्साहसंततिः ॥ ३४ ॥ गिरांश्रू-
यते कोकिला कोविदाऽरं यतस्तद्वनं
वि[5]स्फुरत्कोविदारम् ॥ मुनीनां वसत्यत्र
लोकोविदा[6]रं न च व्याधचक्रं कृतौ[7]को
विदारम् ॥ ३५ ॥ सिं[8]धुरोचितसाग्रश

---

१ यस्यांभसः समीपेषु । २ अवक्राः । ३ मधोर्वसंतस्य प्रवेशेपिककामिनीनां कांतारवाचं सोढुं क्षमतेस्म. अपि तुनकाम पिरतेशेपथि वर्त्तमाने सति । ४ हास्यं । ५ विकसंतः कोवि-दाराः कचनारवृक्षविशेषास्तत्र । ६ निःकलत्रं यथास्यात् । ७ पक्षिकृतनिवासकम् । ८ गजोचितासु लतासु प्रधानप्रभूता या शल्लकी तद्युक्ताय। सिंधुर्नदी तयारोचितं शोभितं ।

ल्लकीसिंधुरोचित मुपेत्य किन्नरैः ॥ कंद
राजित मदस्तटऽगिरेः कं[1]दराजितगृहश्रि
गीयते ॥ ३६ ॥ वसन् सरोगोऽत्र जनो न
कश्चित्परं सरोगो यदि राजहंसः ॥ गी
तंकलं को न करोति सिद्धः शैले कलंको
कितकाननेऽस्मिन् ॥ ३७ ॥ जहुर्वसंते
सरसीर्निवारणा बभुः पिकानां मधुरा
नवा र[2]णाः ॥ रसं न कां[3] मोहनकोवि दार
कं विलोकयंतीवकुलान्विदारकम्॥३८॥
व[4]रणा प्रसू[5]ननिकरा वरणा मलिनां वहंति
पटलीमलिनां॥तरवःसदात्र शिखिजातर
वः सरसश्च भाति निकटे सरसः ३९
यथा यथा द्विजिह्वस्य[6] वि[7]भवः स्यान्मह
हत्त[8]मः॥तथा तथास्य जायेत स्पर्द्धयेव म
हत्त[9]मः॥४०॥दास्यति दास्यति कोपादा

१ कन्दैःराजितं शोभमानम् । २ रणाः शब्दाः रणशब्द इति धातुः । ३ कासुरतपंडिता स्त्रीकिंरसं न आर अपितु सर्वां सर्वं रसं प्राप्येत्यर्थः विदारकं निरपत्यं यथास्यात्तथा तस्या एव संभोगक्षमत्वात् । ४ वृक्षविशेषाः । ५ पुष्पसमूहाच्छादकाः । ६ दुर्ज्जनस्य । ७ धनं । ८ उत्कृष्टतमं । ९ महत्तमः महदज्ञानम् ।

स्यति सति कर्कशांस्तुते शापम् ॥ भवति भवतिह्यनर्थौ भवति मितस्तेन बटुक त्वम् ॥ ४१ ॥ कुलं[1] तिमिभयादत्र करेणूनां नदीव्यति ॥ न दीव्यति करेणूनां प्राणिनां गणनाऽयिका ॥ ४२ ॥ गंगां बुधवलांगाभोमुमुक्षुध्यानगोचरः ॥ पापार्त्तिहरणार्यास्तु समज्ञानो जिनः सताम् ॥ ४३ ॥ जगदात्मकीर्त्तिशुभ्रंजनयन्नुद्दामधामदो[2]:परिघः ॥ जयति प्रताप[3]पूषा जयसिंहः क्ष्माभृ[4]दधिनाथः ॥ ४४ ॥ मामाकारयतेरामासासा मुदित मानसा ॥ याया मदा[5]रुणच्छाया नाना[6]हेलामया नाना ॥ ४५ ॥ स्वभावोक्तिः पदार्थस्य

---

१ करेणूनां कुलं समूहः अत्रनदीव्याति करे आस्थाने तिमिः मत्स्यश्रेष्ठः तस्यभयान्नदीव्याति न क्रीडति अणूनांक्षुद्राणां जंतूनां का गणना नकापीत्यर्थः । २ उत्कृष्टतेजा दो रेवअर्गलायस्यसः । ३ प्रतापेन सूर्यः । ४ राजाधिराज इत्यर्थः । ५ मदेन मद्यपानोत्थेनापि मानेन अरुणा रक्ता छाया कांतिर्यस्याःसा मदारुणच्छाया । ६ नानाप्रकारविलासाश्रयं आननं यस्याःसा ।

सं[१]क्रियस्या क्रियं[२]स्यच- ॥ जा[३]तिर्विशेषतो रम्या हीने त्रस्तेर्भकादिषु ॥ ४६ बर्हाव लीबहलकांचिरुचो विचित्रभूर्यंत्वचार च्चितचारुदुकूललीलाः ॥ गुंजाफलग्रथित हारलताः सहेलंखेलंति खेलगतयोऽत्रवने शबर्य[४]र्यः॥४७ ॥ आ[५]रत्तणेत्तसंराणिभीसण वयणुक्करो कुरंगछि उल्लसितअवीसभु अवणविनिवेशो दश मुहो एसो ॥ ४८ ॥ उपमानेन सादृश्य मुपमेयस्य यत्र सा प्रत्यया१व्ययर२तुल्यार्थ३समासै रुपमा मता ॥ ४९ ॥ गत्या विभ्रममंदया प्रति पदं या राजहंसायते यस्याः पूर्णमृगांक मंडलमिव श्रीमत्सदैवाननं ॥ यस्याश्चा नुकरोति नेत्रयुगलं नीलोत्पलानि श्रिया तांकुन्दाग्रदतीं त्यजन् जि[६]नपती राजा-

---

२ सक्रियस्यमनुष्यादेः । २ अक्रियस्यपर्वतादेः । ३ जातिः स्वभाववर्णनं । ४ शवर्य्यः भिल्लस्त्रियः । ५ आरक्तनेत्रश्रीणिभीषणवदनोत्करः उल्लसितविंशतिभुजवनानिकरः एषः दशमुखः हे कुरंगाक्षिसीते । ६ श्रीनेमिः

मतिं पातु वः ॥ ५० ॥ चन्द्रवद्वदनं तस्यानेत्रे नीलोत्पलेइव॥यस्या बिंबं हसत्योष्ठः पुष्पधन्वधनुर्भ्रुवौ ॥ ५१ ॥ मअभणीय माणासस्स विणिच्चंदोसाअरस्स सासिणुव्वतुअ विरहे तीएमुहं सं- कुंडि अंसुभअ कुमुहंच ॥ ५२ ॥ तंणमह वीअराअं जिणंद मुहत्तिअदिठअरकसाअं॥ जस्स मणं व सरीरं वसुपसन्नं॥ ५३ ॥ ये देव भवतः पादौ भवत्पादाविवाश्रिताः ॥ तेलभंतेद्भुतांभाव्यां श्रियं त इवशाश्वतीम्॥५४॥आलोकनं च वचनंच निगूहनं च यासां स्मरन्नमृतवत्सरसंकृशस्त्वम्।तासां किमंग पिशितास्रपुरीषपात्रं गात्रं विचिंत्य सुदर्शन निराकुलोसि ॥ ५५ ॥ कलेव चंद्रस्य कलंकमुक्ता मुक्तावलीवोरुगुणप्रपन्ना ॥ जगत्रयस्याभिमतं ददाना जैनेश्वरी

---

१ पुनःक्रमशश्चतस्रः शशिन इव नवविरहे कुमुदमिवतस्याः मुखं संकुचितं ।

कल्पलतेवमूर्तिः ॥ ५६ ॥ विभिन्नलिंगव
चनां नातिहीनाधिकां च ताम् ॥ निबध्नं
तिबुधाः क्वापि लिंगभेदं तु मेनिरे॥ ५७ ॥
हिममिव कीर्त्तिर्धवला चन्द्रकलेवाति
निर्मला वाचः ॥ध्वांक्षस्येवच दाक्ष्यंनभइ
व वक्षश्चते विपुलम् ॥ ५८ ॥ शुनीयंगृह
देवीव प्रत्यक्षा प्रतिभासते ॥ खद्योत इव
सर्वत्र प्रतापश्च विराजते ॥ ५९ ॥ सफेन-
पिंडः प्रौढोर्म्मिमराब्धिः शार्ङ्गीव शंखभृत् ॥
श्च्योतन्मदः करी वर्षन्विद्युत्त्वानिव वा-
रिदः ॥ ६० ॥ मुखं चन्द्रमिवालोक्यदेवा
ह्लादकरं तव ॥ कुमुदंतिमुदाक्षीणि क्षीण
मध्यात्मसंपदाम् ॥ ६१ ॥ निजजीविते
शकरजाग्रकृतक्षतपंक्तयः शुशुभिरे सुर
ते ॥कुपितस्मरप्राहितबाणगणव्रणजर्ज्जरा
इवसरोजदृशः॥६२॥ दोः कंदलीं काचिद
वश्यनाथा सिषेच नेत्रक्षरदश्रुपूरैः॥हस्ता

१ कुमुदमिवाचरंति फुल्लंतीत्यर्थः । २ कृशकन्या शरीरे शोभायासांताः तासाम् । ३ अत्र रूपके दोषः पुंस्त्वे-कदल्या स्त्रीत्वेपि न दोषः समासेन विरोधनात् ।

ग्रविन्यस्तकपोलदेशा मिथो मिलत्कुंड लकङ्कणश्रीः ॥ ६३ ॥ बहुवीरे[1] प्यसावेको यदुवंशेद्भुतोऽभवत् ॥ किं केतकीदलानि स्युः सुरभीण्यखिलान्यपि ॥६४॥ रूपकं यत्र साधर्म्यादर्थयो रभिदा[2]भवेत् समस्तं वासमस्तं वा खंडंवाखंडमेवच॥६५॥ कीर्णांध[3]कारालकशा लमाना निबद्धतारास्थिमणिः कुतोपि ॥ नि[4]शापिशाची व्यचरद्दधानामहान्त्युलूकध्वनिफेत्कृतानि॥६६॥संसा[5]र एष कूपःसलिलानि विपत्तिदुःखजन्मानि ॥ हरिधर्मएव रज्जु स्तस्मादुद्धरति निर्मग्नान्।६७।अधरं[6] मुखेन नयनेन रुचिं सुरभित्वमाब्ज मिव नासि-

---

१ अत्र वस्तूपमाथा वंशस्य केतकी वीराणामसुरभि दलितानि श्रीनेमेः सुरभिदलान्युपमानं तत्र लिंगभेदः समासेन तिरोहित इति न दोषः। २ उपमानोपमेययोरभिदा ऐक्यारोपणं तच्चतुःप्रकारं। ३ व्याप्ततमोरूपकुंतलशोभमाना इत्यर्थः। ४ अत्र निशयोपमेयेन सह पिशाच्या उपमानस्य समासकरणात् समस्तं पिशाचीधर्मकथनाच्च संपूर्णम्। ५ इदं समस्तं संपूर्णरूपकं। ६ अधर मित्यत्र न कश्चिद्धर्मः प्रतिपादितः इति खंडनसमस्तमसंपूर्णं रूपकम्।

कया ॥ वरवर्णिनीवदच्चन्द्रमसस्तरुणा[1] रसेन[2] युगपन्निपपुः॥६८॥ ज्योत्स्नया धवलीकुर्वन्नुर्वीसकुलपर्वताम्॥ निशाविलास[3] कमलमुदेति स्मनिशाकरः॥६९॥ अनुपात्ताविवादीनां वस्तुनः प्रतिवस्तुना यत्रप्रतीयते साम्यं प्रतिवस्तूपमा तु सा॥७०॥ बहुवीरेऽप्यऽसावेकोयदुवंशे[4]ऽद्भुतोभवत् किं केतक्यां दलानि स्युः सुरभीण्यखिलान्यपि ॥ ७१ ॥ वस्तुन्यन्यत्र कुत्रापि तत्तुल्यस्यान्य वस्तुनः॥निश्चयोयत्र जायेत भ्रांतिमान् स स्मृतो यथा ॥ ७२ ॥ हेमं[5]कमलत्तिवणेणअणेणिलुप्यलंत्तिपस अंक्षि[6] कुसुमंतितुज्झहसिएणिच इडभमराणंणिछेणी ॥ ७३ ॥ उक्तिर्यत्रप्रतीतिर्वा प्रतिषेधस्य जायते ॥ आचक्षते

---

१ पुरुषाः । २ अनुरागेण । ३ इदं समस्तं खंडं रूपकम् । ४ अत्र यदुवंशादेर्वस्तुनः केतक्यादिभिः प्रतिवस्तुभिः सहसादृश्यप्रतीतिः । ५ अत्र हेम कमलादिभ्रमो वदनादौ । ६ प्रसृताक्षि ।

तमाक्षे[1]पमलंकारं बुधा यथा ॥ ७४ ॥ इन्द्रेण किं स यदि कर्णनरेन्द्रसूनुरैराव तेन किं महो यदि तद्द्विपेन्द्रः॥दंभोलिना[2]ऽ प्यलमलं[3]यदि तत्प्रतापः स्वर्गोऽप्ययं ननु सुधा यदि तत्पुरी सा ॥ ७५ ॥ यस्याऽस्ति नरकक्रोडनिवासरसिकं मनः॥ सोऽस्तुहिंसानृतस्तेयतत्परस्सुतरांजनः ॥ ७६ ॥ इच्छं[4]न्ति येन कित्तिंकुणत्तिकरुणं खवणंप्यिजेणेय ॥ तेपणधनदघणरा देत्तिधणं मरण समएवि ॥ ७७ ॥ इद मेतदिदं चेति सम्यगबुद्धेर्हि संशयः॥हेतुभिर्निश्चये सोपि निश्चयांतः स्मृतो यथा ॥ ७८ ॥ किंकेशपाशः प्रतिपक्ष लक्ष्म्याःकिंवा प्रतापानलधूम एषः॥दृष्ट्वा

---

१ अत्र निषेधस्योक्तिः शब्देन प्रतिपादनं प्रतीतिर्वा सामर्थ्यें न स आक्षेपः। २ दंभोलिरशनिर्द्वयोरित्यमरः। ३ अत्र-किंचालंशब्दो निषेधे। ४ येनराः पुरुषाः कीर्तिंनेच्छंतिये-चक्षणमपि करुणां न कुर्वंति तेचधनदवन्मरणसमयेविधनंददति अपिनेत्यर्थः अत्रोदाहरणद्वयेऽर्थसामर्थ्यात्काका निषेधः प्रतीयते नशब्दः।

भवत्पाणिगतं[1] कृपाणमेवं कवीनां मतयः स्फुरंति ॥ ७९ ॥ इन्द्रःस एष[2] यदि किंन सहस्रमक्ष्णां लक्ष्मीपतिर्यदि कथं न चतुर्भुजो सौ॥ आस्पन्दनध्वजधृतोद्धरताम्रचूडः श्रीकर्णदेवनृपसूनुरयं रणाग्रे ८० अन्वयज्ञापनं यत्रक्रियया स्वतदर्थयोः तं दृष्टांतमिति प्राहुरलंकारं मनीषिणः ॥ ८१ ॥ पतितानां संसर्गं त्यजंति दूरे णनिर्म्मला गुणिनः॥इति कथयन् जरतीनां हारः परिहरति कुचयुगलम् ॥ ८२ ॥ केनचिद्यत्र धर्मेण द्वयोः संसिद्धसाम्ययोः ॥भवत्ये कतराधिक्यं व्यतिरेकस्स उच्यते ॥ ८३ ॥ अस्त्वस्तु पौरुषगुणाज्जयसिंहदेवपृथ्वीपतेर्मृगपतेश्च समानभावः॥किंत्वेकतः[3] प्रतिभटा समरंविहाय सद्योविशंति वनसिंहमशं

---

१ अत्रकोटिद्वयावगाहित्वात् संशयः। २ अत्र हेतुभिरक्षिसहस्रादिभिः शब्दैर्निश्चयेनिश्चयांतः। ३ अत्र शत्रूणांवनप्रवेशेनान्यसिंहाज्जयसिंहस्याधिक्यम्।

कमानाः ॥ ८४ ॥ नेदमेतदिदंचैतदि
त्यपह्नवपूर्वकम् ॥उच्यते यत्र सादृश्या
दऽपन्हुतिरियंयथा॥८५। नैतन्निशायांशि
तिसूचिभेद्यमंधीकृतालोकन मंधकारम्
॥ निशागमप्रास्थितपंचबाणसेनासमुत्था
पित एष रेणुः ॥८६ ॥ उपमेयंसमीकर्तुमु
पमानेन योज्यते॥तुल्यैककालक्रियया-
यत्र सा तुल्ययोगिता ॥ ८७ ॥ तमसा
लुप्यमानानां लोकेऽस्मिन् साधुवर्त्म-
नाम् ॥ प्रकाशनाय पटुता भानोस्तव
च दृश्यते॥८८॥कल्पना काचिदौचित्या
द्यत्रान्यस्य सतोऽन्यथा ॥ द्योतितेवादि
भिःशब्दैरुत्प्रेक्षा सा स्मृतायथा ॥८९॥न
भस्तले किंचिदिव प्रविष्टाश्चकाशिरेच-
न्द्ररुचिप्ररोहाः॥ जगद्गिलित्वा हसतःप्र
मोदाद्दन्ता इव ध्वांतनिशाचरस्य॥९०उ
क्तसिद्ध्यर्थमन्यार्थंन्यासोव्याप्तिपुरस्स
रः॥ कथ्यतेऽर्थान्तरन्यासः श्लिष्टोश्लिष्ट

१ एतादिदंनहि निश्चितमेतादिदंसेयमपन्हुतिः ।

श्वसद्विधा ॥ ९१ ॥ शोणत्वमक्ष्णामसि
ताब्जभासां गिरां प्रचारस्त्वऽपरप्रका
शः॥बभूव पानान्मधुनो वधूनामचिन्तनी
योहिसुरानुभावः॥९२॥शुण्डादण्डैः कंपि
ताः कुञ्जराणां पुष्पोत्सर्गपादपाश्चारुच
ञ्कुः॥स्तब्धाकाराः किं प्रयच्छंतिकिंचि
त्कांतायावन्नैव तैर्वीतशंकम्॥९३॥उच्चय
तेवक्तुमिष्टस्य प्रतीतजननक्षमम्॥सधर्म
यत्र वस्त्वन्यत्समासोक्तिरियंयथा९४॥
मधुकर मा कुरु शोकं विचर करीरद्रु
मस्य कुसुमेषु ॥ घनतुहिनपातदलिता
कथं नु सा मालती मिलति ॥९५॥ चिंत-
यति न चूतलतां याति न जातीं न केतकीं
क्रमते ॥ कमललतालग्नमना मधुपयुवा
केवलं क्वणति ॥९६॥ विना कारणसद्भावं
यत्र कार्य्यस्य दर्शनम् ॥ नैसर्गिकगुणो
त्कर्षभावना स्याद्विभावना ॥ ९७ ॥ अन
ध्ययनविद्वांसो निर्द्रव्यपरमेश्वराः॥अन
लंकारसुभगाः पांतु युष्मान् जिनेश्वराः

१ उच्चसमवाये ।

९८॥आदिमध्यान्तवर्त्यैकपदार्थेनार्थसं-
गतिः॥वाक्यस्य यत्र जायेत तदुक्तं दीप
कं यथा ॥ ९९ ॥ जगुस्तव दिवि स्वामि-
न् गंधर्वाःपावनंयशः ॥ किन्नराश्च कुला
द्रीणां कन्दरेषु मुहुर्मुहुः ॥ १००॥ विराजं
ति तमिस्राणि द्योतंते दिवि तारकाः॥वि-
भांति कुमुदश्रेण्यः शोभंते निशि दीप-
काः ॥ १०१ ॥ वस्तुनो वक्तुमुत्कर्ष
मसंभाव्यं यदुच्यते ॥वदंत्यतिशयाख्यं
तमलंकारं बुधायथा ॥ २ ॥ त्वद्वारितारि
तरुणीश्वसितानिलेन संमूर्च्छितोर्मिषु
महोदधिषु क्षितीश ॥ अन्तर्लुठद्गिरिपर
स्परशृंगसङ्घघोरारवैर्मुररिपोरपयातिनि
द्रा ॥ ३ ॥ एकदंडानि समस्युर्यदिच्छ
त्राणि पर्वते॥तदोपमीयते पार्श्वमूर्ध्नि सप्त
फणः फणी ॥ ४ ॥ यत्रोत्पादयतः कंचिऽ
दर्थंकर्तुः प्रकाशते ॥ तद्योग्यतायुक्ति
रसौ हेतुरुक्तो बुधैर्यथा ॥ ५ ॥ पाणः
समउन्मतातंताविरहेणकुण इणाहस्स

कम्बत्तरच्चोलि अरमहुरसरंवाग्गुलि आ-
गीअं ॥ ५ ॥ विससोअरोमि अंकोअअ
न्नआशाए आगअपवणे॥आजएला सो-
सिहरीपहिअम्मरितित्तेतिणि ॥६॥ अत-
त्परतयायत्र जल्प्यमानेन वस्तुना॥विव
क्षितं प्रतीयेत पर्य्यायोक्तिरियं यथा ॥
॥ ७ ॥ त्वत्सैन्यवाहनिवहस्य महाहवेषु
द्वेषः प्रभोरिपुपुरंध्रिजनस्यचाऽऽसीत् ॥
एकः खुरैर्बहलरेणुततिं चकार तां संज-
हार पुनरश्रुजलैर्यदन्यः ॥ ८ ॥ कारणां-
तरसंपत्तिर्दैवादारंभएवहि॥यत्रकार्यस्य
जायेत तज्जायेत समाहितम् ॥ ९ ॥ मन-
स्विनी वल्लभवेश्मगंतुमुत्कंठिता यावद-
भून्निशायां ॥ तावन्नवांभोधरधीरनादप्र-
बोधितःसौधशिखी चुकूज॥१०॥परिवर्त्त-
नमर्थेन सदृशासदृशेन वा॥जायतेऽर्थस्य
यत्रासौ परिवृत्तिर्मता यथा ॥११॥अन्त-
र्गतव्यालफणामणीनां प्रभाभिरुद्भासि-
तभूषु भर्त्तुः ॥ स्फुरत्प्रदीपानिगृहाणिसु

क्त्वा गुहासु शेते त्वदरातिवर्गः ॥१२॥ दत्वा प्रहारं रिपुपार्थिवानां जग्राह यः संयति जीवितव्यम् ॥ शृंगारभंगीश्च तदंगनानामादाय दुःखानि ददौ सदैव ।१३॥ यत्रोक्तानां पदार्थानामर्थाः संबंधिनः पुनः ॥ क्रमेण तेन बध्यंते तद्यथासंख्यमुच्यते १४ मृदुभुजलतिकाभ्यां शोणिमानं दधत्याचरणकमलभासा चारुणा चाननेन॥ बिसकिसलयपद्मान्यात्तलक्ष्मीणि मन्ये विरहविपदि वैरात्तन्वते तापमंगे ॥ १५ ॥ वस्तुनो यत्र संबंधमनौचित्येन केनचित् ॥ असंभाव्यं भवेद्धक्तास्ऽऽमाहुर्विषमं यथा ॥ १६ ॥ क्वेदं तव वपु र्वत्से कदलीगर्भसंनिभम् ॥ क्वायं राजमतिक्लेशदायी व्रतपरिग्रहः ॥ १७ ॥ सहोक्तिः सा भवेद्यत्र कार्यकारणयोः सह ॥ समुत्पत्तिः कथाहेतोर्वक्तुं तज्जन्मशक्तिताम् ॥ १८ ॥ आदत्ते सह यशसा नमयति सार्द्धं मदेन संग्रामे॥सह विद्विषाश्रियाऽसौ कोदंडं क

षंतिश्रीमान् ॥१९॥ आयातेहि विरुद्धत्वं यत्रवाक्येन तत्वतः ॥ शब्दार्थकृतमाऽऽभाति स विरोधः स्मृतोयथा॥२०॥दुर्वारबाणविभवेन सुवर्मणापि लोकोत्तरान्वयभुवापि च धीवरेण ॥ प्रत्यर्थिषु प्रतिरणं स्खलितेषु तेन संज्ञामवाप्य युयुधे पुनरेव विष्णुः ॥ २१ ॥ येनाऽऽक्रांतंसिंहासनऽमरिभूभृच्छिरांस्यवनतानि॥क्षिप्तायुधिशरपंक्तिःकीर्त्तिर्याता दिगंतेषु॥२२॥ यत्रार्थान्तरमुत्कृष्टं संभवत्युपलक्षणम्॥ प्रस्तुतार्थस्यसप्रोक्तो बुधैरवसरो यथा ॥२३॥ स एष निश्चयानन्दः स्वच्छन्दतमविक्रमः ॥ येन नक्तंचरस्सोऽपि युद्धे वर्वरकोजितः ॥२४॥ यत्रनिर्द्धारितात्सारात् सारं सारं ततस्ततः ॥ निर्द्धार्य्यतेयथाशक्ति तत्सारमिति कथ्यते॥२५॥ संसारे मानुष्यं सारं मानुष्यकेषु कौलीन्यं॥ कौलीन्येपिच धर्मित्वं धर्मित्वे चाऽपि सदन्वयवत्त्वं ॥ २६ ॥ पदैस्तैरेव भिन्नै

वाँक्यं वक्त्र्येकमेवहि ॥ अनेकमर्थं यत्रासौ श्लेष इत्युच्यते यथा ॥ २७ ॥ आनन्दमुल्लासयतः समंतात्करैरसंतापकरैः प्रजानाम् ॥ यस्योदये क्षोभऽमवाप्य राज्ञो जग्राहवेलां किल सिंधुनाथः ॥ २८॥ कुर्वन् कुवलयोल्लासं रम्यांभोजश्रियंहरन् ॥रेजे राजाऽपियच्चित्रं निशांते कांतिमत्तया २९॥एकत्र यत्र वस्तूनाऽमनेकेषां निबंधनम् ॥अत्युत्कृष्टापकृष्टानां तं वदंतिसमुच्चयम् ॥ ३० ॥ अनहिल्लपाटकं पुरमवनि पतिः कर्णदेवनृपसूनुः ॥श्रीकलशनामधेयः करी च रत्नानि जगतीह ॥३१ ॥ग्रामे वासो नायकोनिर्विवेकः कौटिल्यानामेकपात्रं कलत्रम्॥नित्यं रोगः पारवश्यं च पुंसामेतत्सर्वं जीवतामेवमृत्युः॥३२॥प्रशंसाक्रियते यत्राप्रस्तुतस्यापिवस्तुनः ॥ अप्रस्तुतप्रशंसांतामाहुः कृतधियो यथा॥३३॥ स्वैरं विहरति स्वैरं शेतेस्वैरंच जल्पति ॥ भिक्षुरेकः सुखीलो

केराजचौरभयोज्झितः॥३४॥पूर्वंपूर्वार्थं
वैशिष्ट्यानिष्टानामुत्तरोत्तरम् ॥ अर्थानां
याविरचना बुधैरेकावली मता ॥ ३५॥
देशस्समृद्धनगरो नगराणि चसंप्रभूत-
निलयानि ॥निलयाः सलीलललना लल-
नाश्चाऽत्यंतकमनीयाः ॥ ३६॥ प्रत्यक्षा-
ल्लिगतो यत्र कालत्रितयवर्त्तिनः।लिंगि-
नो भवति ज्ञानमनुमानं तदुच्यते॥३७॥
नूनं नद्यस्तदा भूवन्नभिषेकांभसा विभोः
अन्यथा कथमेतासु जनःस्नानेन शुद्ध्य
ति ॥३८॥ जंभजित्ककुभिज्योतिर्यथाशु
भ्रंविजृंभते ॥ उदेष्यति तथा मन्ये खलः
सखि निशाकरः ॥ ३९॥मुखप्रभाबाधित
कांतिऽरस्या दोषाकरः किंकरतां दधा-
ति ॥ तल्लोचनश्रीर्हृतिसापराधान्यब्जा-
नि नो चेत्किऽमथंक्षिणोति॥४०॥यत्रसा-
धारणं किंचिदेकत्र प्रतिपाद्यते॥ अन्य-
त्र तन्निवृत्त्यै सा परिसंख्योऽच्यते बुधैः॥
॥ ४१ ॥ यत्र वायुः परं चौरः परं सौरभ्य-

संपदाम्॥युवानश्च धृतक्रोधा देव बिभ्यु वेंधूजनात् ॥ ४२ ॥ प्रश्नो यत्रोऽत्तरं व्यक्तं गूढं वाऽप्यऽथ चोऽभयम्॥प्रश्नोत्तरं तथोऽक्तानां संसर्गं संकरं विदुः ॥ ४३ ॥ अस्मिन्नपारसंसारसागरे मज्जतां सतां ॥ किं समालंबनं साधो रागद्वेषपरिक्षयः ॥ ॥ ४४ ॥ क्व वसंति श्रियो नित्यं भूभृतां वदकोविद॥असाऽवतिशयः कोऽपि यदुऽक्तमऽपिनोऽह्यते ॥ ४५ ॥ किमैभं श्लाघ्य माऽऽभाति पक्ष्याख्या का कुतो यशः ॥ गरुडःकीदृशो नित्यं दानवारिविराजितः ॥४६॥बज्भंडसुत्तिसंपुटमुत्तिअमणिणोपहासमूहोव्व ॥सिरिवाहडोत्तितणआसिंबुहोतस्ससोमस्स ॥४७॥अचमत्कारता वा स्यादुत्कांतभाव एव वा ॥ अलंक्रियाणामन्यासामनिबंधे निबंधनम् ॥ ४८ ॥ द्वित्रिपदा पांचाली लाटीया पंचसप्त वा यावत् ॥ शब्दास्समासवंतोभवंति यथाशक्ति गौडीया ॥४९॥ द्वे एव रीती गौडी

या वैदर्भी चेऽति सांतरे ॥ एका भूयः स-
मासा स्यादसमस्तपदा परा ॥५०॥ दर्पो-
त्पाटिततुंगपर्वतशतग्रांवप्रपाताहतिक्रू
राक्रंददतुच्छकच्छपकुलक्रेंकारघोरीकृ
तः ॥ विष्वग्ववर्वरवध्यमानपयसः शिप्राप-
गायाःस्फुरन्नाऽऽक्रामत्यऽयमऽक्रमेणब-
हुलः कल्लोलकोलाहलः ॥ ५१ ॥ विप्राः
प्रकृत्यैव भवंति लोला लोकोक्तिरेषा न
मृषा कदाचित्॥ यच्चुम्बमानां मधुपैर्द्विजे
शः श्लिष्यत्यसौ कैरविणीं करेण ॥ ५२ ॥
अर्थेन येनातिचमत्करोति प्रायः कवि-
त्वं कृतिनां मनस्तु ॥ अलंक्रियात्वेन स
एव तस्मिन्नभ्यस्यतां हंत दिशा तयैव
॥ ५३ ॥ इतिवाग्भटालंकारेऽलंकारनिरू
पणोनामचतुर्थःपरिच्छेदः ॥ ४ ॥ ॥

---

पञ्चमः परिच्छेदः ।

साधुपाकेऽप्यनास्वाद्यं भोज्यं निर्लवणंय
था॥ तथैव नीरसं काव्यमिति ब्रूमोरसानि

ह॥१॥अनुभावैर्विभावैश्च सात्विकैर्व्यभि
चारिभिः॥ आरोप्यमाणउत्कर्षस्थायी
भावः स्मृतो बुधैः॥२॥ शृंगारवीरकरुणा
द्भुतहास्यभयानकाः॥ रौद्रबीभत्सशांता
श्चनवैतेनिश्चिता बुधैः॥ ३॥ जायापत्यो
र्मिथोरत्या वृत्तिःशृंगार उच्यते॥संयोगो
विप्रलंभश्चे त्येषतु द्विविधोमतः॥ ४॥ तौ
तयोर्भवतोवाच्यौ बुधैर्युवियुक्तकयोः॥
प्रच्छन्नश्चाप्रकाशश्च पुनरेष द्विधामतः
॥ ५ ॥ रूपसौभाग्यसम्पन्नःकुलीनःकु-
शलोयुवाअनुद्धतो हृद्यवादी ख्यातो ने-
ताऽत्रसद्गुणः॥६॥अयं च विबुधैरुक्तोऽनुकू
लो दक्षिणःशठः॥ धृष्टश्चेतिचतुर्धा स्या-
न्नायिका स्याच्चतुर्विधा॥ ७॥ लीनरागोऽ
नुकूलः स्यादनन्यरमणीरतः॥दक्षिणश्चा
न्यचित्तोपि यः स्यादविकृतः स्त्रियाम्॥
॥ ८॥ प्रियंवक्त्यप्रियं तस्याः कुर्वन्यो वि
कृतः शठः॥ धृष्टोज्ञातापराधोपि न विल-
क्षोवमानितः ॥ ९ ॥ अनूढा च स्वकी

या च परकीया परांगना ॥ त्रिवर्गिणः स्वकीया स्वादन्या केवलकामिनः ॥१०॥ अनुरक्तानुरक्तेन स्वयं यास्वीकृता भवेत् ॥ अनूढेति यथाराज्ञो दुष्यंतस्य शकुंतला॥११॥ देवतागुरुसाक्ष्येण्या स्वीकृता स्वीयनायिका ॥ क्षमावत्यति गंभीरप्रकृतिः सच्चरित्रभृत् ॥ १२ ॥ परकीयाऽप्यनूढैव वाक्यभेदोस्ति चानयोः ॥ स्वयमेत्यतिकामैका सख्यैवेंका प्रियं वदेत् ॥ १३ ॥ सामान्यवनिता वेश्या[1] भवेत्कपटपंडिता॥ नहिकश्चित्प्रियस्तस्यादातारं नायकं विना ॥ १४ ॥ सर्वप्रकाशमेवैषा याति नायकमुद्धता ॥ वाच्यः प्रच्छन्न एवान्यस्त्रीणांपतिसमागमः ॥१५॥पूर्वानुरागमानात्मप्रवासकरुणात्मकः ॥ विप्रलंभश्चतुर्द्धा स्यात्पूर्वः पूर्वोऽद्वयं गुरुः ॥ १६ ॥ स्त्रीपुंसयोर्नवा-

---

१ वित्तमात्रोपाधिकसकलपुरुषाभिलाषा वेश्या तदेवात्र निदर्शनमस्तिप्रदातारं नायकं विनेति ॥ ६ ॥

लोकादेवोऽल्लसितरागयोः ॥ ज्ञेयः पूर्वा
नुरागोयमपूर्णस्पृहयोर्दृशोः ॥ १७ ॥
मानोऽन्यवनितासंगादीर्ष्याविकृतिरु-
च्यते ॥ प्रवासः परदेशस्थे प्रिये विरहसं
भवः ॥ १८ ॥ स्यादेकतरपंचत्वे दं-
पत्योरनुरक्तयोः॥शृंगारः करुणाख्यो
ऽयं वृत्तवर्णन एव सः ॥ १९ ॥ उत्सा
हात्मा भवेद्वीरः त्रेधाऽधर्माजिदानतः ॥
नायकोऽत्र भवेत्सर्वैः श्लाघ्यैरधिगतो
गुणैः ॥ २० ॥ शोकोत्थः करुणो ज्ञेयस्त-
त्र भूपातरोदने ॥ वैवर्ण्यमोहनिर्वेदप्रला-
पाश्रूणि कीर्तयेत् ॥ २१ ॥ हासमूलस्स-
माख्यातो हास्यनामा रसो बुधैः ॥चेष्टां-
गवेषवैकृत्याद्वाच्यो हासस्यचोद्भवः ॥
॥२२॥कपोलाक्षिकृतोल्लासो भिन्नोष्ठः स
महात्मनाम् ॥ विदीर्णास्यश्च मध्या
नामधमानां सशब्दकः ॥२३॥ विस्मया-
त्माद्भुतो ज्ञेयस्स चाऽसंभाव्यवस्तुनः ॥

दर्शनाच्छ्रवणाद्वापि प्राणिनामुपजाय
ते ॥ २४ ॥ तत्र नेत्रविकाशःस्यात्पुलकः
स्वेदएवच ॥निस्पन्दनेत्रता साधुसाधुवा
ग्गद्गदा च गीः ॥ २५॥ भयानको भवे
द्भीतप्रकृतिर्घोरवस्तुनः ॥ सच प्रायेण
वनितानीचबालेषु शस्यते ॥ २६ ॥ दि-
गालोकास्यशेषांगस्वेदगद्गदसंभ्रमाः ॥
त्रासवैवर्ण्यमोहाश्च वर्ण्यन्ते विबुधैरि-
ह ॥ २७ ॥ क्रोधात्मको भवेद्रौद्रः क्रोध-
श्चारिपराभवात् ॥ भीष्मवृत्तिर्भवेदुग्र
स्सामर्षस्तत्र नायकः ॥२८ ॥ स्वांसाघा
तप्रशंसास्त्रोत्क्षेपभ्रुकुटयस्तथा॥[1]अनारत
जनाक्षेपो दलनं चोपवर्ण्यते॥२९ ॥ बीभ-
त्सः स्याज्जुगुप्सातः सौहृद्यश्रवणेक्षणात्
निष्ठीवनास्यभंगादिःस्यादत्र महतांनच
॥ ३०॥सम्यग्ज्ञानसमुत्त्थानः शांतो निः

१ आरातिरिद्विः ।

स्पृहनायकः॥रागद्वेषपरित्यागात्सम्यग्ज्ञानस्य चोऽद्भवः॥३१॥दोषैरुज्झित माश्रितं गुणगणैश्चेतश्चमत्कारिभिर्नानालंकृतिभिः परीतमभितो रीत्या स्फुरंत्या सतां॥ तैस्तैस्तन्मयतां गतं नवरसैराकल्प्य कालं सदा स्रष्टारो रचयंतु काव्यपुरुषं सारस्वतध्यायिनः ॥ ३२ ॥

इति श्रीवाग्भटालङ्कारे पञ्चमः परिच्छेदः ॥ ५ ॥

---

पुस्तक मिलनेका ठिकाना-

**खेमराज श्रीकृष्णदास**

"श्रीवेंकटेश्वर" छापाखाना-बम्बई.

॥ श्रीः ॥

# भार्गवचम्पूः।

श्रीरामकृष्णसूरिप्रणीता ।

टिप्पणीसमेता ।



मुम्बई

श्रीकृष्णदासात्मज-

गङ्गाविष्णु खेमराजो

"श्रीवेङ्कटेश्वर" मुद्रायन्त्रम् ।

मुद्रणमस्य पुस्तकस्य गोपालनारायणजनतायन्त्रालये ।

श्रीः

रामकृष्णसूरिविरचिता

# भार्गवचम्पूः ।



## प्रथमः स्तबकः ।

श्रीपतिं प्रणमद्वृन्दारकवृन्दो[1]भिनन्दनम् ॥
भवबन्धच्छिदं वन्द्यं वन्दे मान्द्य[2]निवृत्तये ॥ १ ॥

देवः शारद[3]पद्मकोरकमदप्रध्वंसिपद्माकुच-
प्राग्भारस्फुटचारुपत्ररचनाचातुर्यरत्नाकरः ॥
लक्ष्मीनेत्रकटाक्षवीक्षणशरव्यापारलक्षीकृतः
क्षिप्रं पक्षिपति[4]ध्वजो वितनुतां शस्तं[5] प्रशस्तं मम ॥२॥

निर्निमेष[6]पदावाप्त्यै संविशन्ति वनेष्व[7]मी ॥
गुणजालयुताः सन्तो धीवरा इति मे मतिः ॥ ३ ॥

मानससंचारिपदा भव्यगुणा भूति[8]माश्रिता सरसा ॥
सत्कृतिरपि बहुकाकैः कलहंसीव प्रदूष्यते कुजनैः ॥४॥

तत्र ।

---

१ वृन्दारकवृन्दो देवसमूह । २ जडबुद्धित्वनाशाय । ३ शरत्कालीन-पद्मकलिकागर्वहरौ यौ कुचप्राग्भारौ (प्राग्भारौ शैलशृङ्गौ (टेकडीति भाषा-या) ताविव कुचौ स्तनौ, ‘उपमित व्याघ्रादिभि’रीति समासः) तयोः स्फुटा स्पष्टा या चार्वी सुन्दरा पत्ररचना कस्तूरीकुङ्कमादिभिश्चित्रलेख्य तद्विषयं या चतुरता तस्या रत्नाकर इव । अतीव कुशल इत्यर्थः । ‘शैलाग्रे शिखरं शृङ्गं दन्तः प्राग्भार इत्यपि’ इत्यभिधानम् । ४ गरुडध्वजः । ५ शास्त मङ्गलम् । ६ निर्निमेषा देवा मत्स्याश्च । ७ काननेषु उदकेषु च । ८ मतिरैश्वर्यं भस्म च ।

भाव्यालंकृतिहृद्यवर्णसुपदन्यासोज्झितामत्कृतिः
केय नूनमनल्पदूषणपदं स्यादेव किं तावता ॥
सन्तः सन्ति सदा यदास्यसरणीसंचारिणः प्रस्फुर-
द्दोषास्तेपि गुणाः स्युरम्बुदमुखैरम्भांसि सिन्धोरिव ॥५॥

अस्ति च चतुःसमुद्रवलयमध्यगतसकलवसुन्धराखण्डमण्डनं खर्वीकृतशर्वारिगर्वपर्वतैः विनिर्जितकोपाटोपैः स्फुरज्जटामुकुटविराजितोत्तमाङ्गैः पुरन्दरादिवन्दितवन्द्यसुन्दरमुकुन्दपदारविन्दमकरन्दषट्पदैरविरतानित्यानित्यवस्तुविचारपरवशैर्मुनिजनैर्जनितसौभाग्यं सारिकासारसहंसशुकचक्रवाककोकिलपरपुष्टकण्ठध्वनिभिः पान्थानां हृदयादिवातिरमणीयमसमप्रदेशं कस्तूरीहरिणवराहसमुत्तुङ्गमातङ्गगवयकृष्णसारमृगपञ्चाननप्रभृतिभिर्वनचरैरप्यन्योन्यमवनपरैः पशुभिराधिष्ठितम् अधरीकृतनन्दनवनरामणीयकं निजाविमलकीलालबहुललोलकल्लोलोच्छलच्छालिततरतुषारपवित्रिताखिलराशे(?)जनाभखण्डसुकीर्तिकेतुयष्टेः स्नानार्थागताकिन्नरीगणनिर्धौतस्तनकुङ्कुमपङ्काङ्कितोत्तुङ्गतरङ्गवत्या भगवत्याः सरस्वत्यास्तीरम् । यत्र परोपकारार्थजन्मानोऽनेकशाखिनः कमनीयपरिच्छदाः फेनपा इव पादपाः सन्ति । यत्र च लताः सर्वर्तुपुष्पवत्योपि अप्रदोषविकासिन्यो मुनिनिचयावचितकुसुमाः सन्ति ।

चूताश्वत्थकपित्थकुन्दतिलकप्लक्षाक्षसन्तानकै-
र्बिल्वानीलतमालतालपनसप्रोच्चाप्रियालेङ्गुदैः ॥

---

१ ह्रस्वीकृत–लघूकृत– । २ परपुष्टाः कोकिलाः । ३ रामणीयकं सौन्दर्यम् । ४ कीलालं उदकम् । ५ फेनपाः मेघटवा ? । ६ ‘तिळवा’ इति भाषायाम् । ७ कल्पवृक्षाः ।

खर्जूरार्जुनभूर्जलोध्रवकुलैराम्रातकाद्यैरपि
व्याप्तं तद्वरभूरिभूरुहगणैर्देवैर्यथा विष्टपम् ॥ ६ ॥
बहुलशकुनि विदुर्लार्जुनमभितसकृपभीष्मशतद्रुपदम् ॥
सुबहुशिखण्डिसमाधिकं भारतचरितात् सरस्वतीतीरम्॥७
नूनमीर्ष्याभरादिव तयैव सरस्वत्या ।
अमरपुरसमृद्धिस्पर्द्धया वर्धयित्वा
निजरुचिरतटाकप्रान्तसौभाग्यभाग्यम् ॥
तदनुभवसमोदस्तापसानां समूहः
समकृतमुरसम्पद्यस्य हः सस्पृहोपि ॥ ८ ॥

कदाचित्तत्र निगमाध्ययनचयनादियजनदत्तावधाना विषविषमविषयाविषह्यरयग्रस्तविवेकग्राम्यजनानुग्राहका निखिलनिगमार्थपारदृश्वानो वशीकृतकरणान्तःकरणमातरिश्वानो भूरि यज्वानस्तपस्विनोवतेरुर्येषामतिविचित्रतमं चारितम् ॥

भवे रता अप्यभवाश्च केचिद्रमापसक्ताअपि नो रमापाः ॥
हिरण्यगर्भोपमृतास्तथापि हिरण्यगर्भास्तु न ते द्विजाढ्याः॥९॥

---

१ आम्रातको मधूकवृक्षः । २ जगत् । ३ शकुनिः पक्षिः दुर्योधनमातुलश्च । ४ अर्जुना वृक्षा. अर्जुनो भीमानुजः । ५ सकृपाणि सुदर्शनानि भीष्माणि भयङ्कराणि शतानि अनन्तानि द्रुपदानि वृक्षस्थानानि यस्मिन् पक्षे-कृपः कृपाचार्यः भीष्म. प्रसिद्ध. द्रुपदः द्रुपददेशराजा प्रसिद्ध. । ६ शिखण्डी मयूर भीष्मशत्रुश्च । ७ करणानि इन्द्रियाणि । ८ भवः शङ्करः संसारश्च । ९ रमापः श्रीपतिर्विष्णुः द्रव्यवांश्च । १० जगदुत्पत्तिकरो विष्णुः । ११ हिरण्यगर्भः श्रीमान् ।

ससारतापसंशान्त्यै तपोभिस्ते तपस्विनः ॥
चित्रं सततमर्चन्ति श्रीवरं जनतापदम् ॥ १० ॥

अवतीर्य सरस्वतीतीरं वीरुत्तरुणतरुसमुन्निद्रसान्द्रकुसुमसमूहोद्भमद्भ्रमरमञ्जुसिञ्जनप्रणुन्ना इव स्वयमपि तत्तटपावित्र्यहृतचित्ताः सत्रार्थं मन्त्रयामासु ।

इतो भूमी रम्याऽसितमृगपदाङ्कैरतितरा-
मितो दर्भाः शश्वद्धरित इह नीवारपटलम् ॥
इतो वातः सारस्वतजलकणान् मूर्छति वहन्
पिकः प्रोच्चै रम्यं मधुसमयमावेदयति नः ॥ ११ ॥

अपि चास्माकम् ।

यज्ञसम्भारसौलभ्याद्विलुभ्यन्मनसामिह ॥
वृत्तिमुत्साहयत्येतत्तीरं सारस्वतं क्रतौ ॥ १२ ॥

तद्युज्यतेत्र यज्ञभागभुजः सुधाभुजः सभाजयितुम् । ततः ।

युक्तमित्येव ते सर्वेप्यनुमान्य समुत्सुकाः ॥
समग्रां सत्रसामग्रीं कल्पयांचक्रुरञ्जसा ॥ १३ ॥

अनन्तरं कर्षणादिना भूशुद्धिं विधाय विरचितश्च ।

तत्तच्चिन्हवदुन्नतोन्नतचतुर्द्वारः सुधारञ्जितः
प्रत्यग्रस्फुरदाम्रपल्लवभरक्लृप्तोल्लसत्तोरणः ॥
सद्रूपैरभिशोभितश्च निगमध्वानैकशाली पृथु-
प्राग्वंशः कुशनिर्मितास्तरणवान् रम्यः क्रतोर्मण्डपः॥१४॥

---

१ दुष्टजनाना तापद जनता जनसमूहः तस्य पद स्थानम् । २ लतासमूह वीरुत् । ३ प्रणुन्नाः प्रेरिताः । ४ सुधया चूर्णेन रञ्जितः धवल इत्यर्थ । ५ पृथुः भव्य' प्राग्वशः यस्मिन् । हविर्गृहात्पूर्वदेशे सदसादीनां यद्गृह म प्राग्वश इत्यभिधीयते ।

अग्निशालायां च गार्हपत्याहवनीयादीना शरणानि मेखला-भिरुपशोभितानि विरचय्य ।

ततः स्नात्वाथ सलिले सरस्वत्या मुनीश्वरा
कृतजप्याश्च ते विप्रा यज्ञवाटमुपागमन् ॥ १५ ॥

प्रविश्य तस्मिन्विशालेपि सशाले मण्डपे प्रागग्रेषु दर्भेषूपविष्टाः प्रविभक्तकार्याधिकारा मुनयो महता पुण्याहघोषेण दीक्षा प्रवर्तयामासुः । तत्र प्रथमं मुख्यदेवतोद्देशेन क्रियमाणे सङ्कल्पे विकल्पस्तेषामन्तःकरणसदनं मदमत्तमातङ्ग इवोच्चशिलोच्चयदरी-मध्यमध्यतिष्ठन् हरिहरविधयः ।

जगतामीश्वरत्वेन त्रयः पूज्यास्तथाप्ययम् ॥
नरः कस्यानुसरणादत्यन्तं क्षेममश्नुते ॥ १६ ॥

इति तथाविधे व्यतिकरे हिरण्यगर्भोपासकाः प्रोचुः । अहो कथमेते पण्डिता अपि हस्तास्थितवस्तुवीक्षणकृते दर्पणापेक्षा-वता पन्थानमनुसरन्ति । यतः स्पष्टमेवैतत् ।

येन स्वीयेन धाम्ना ज्वलदनलचलज्ज्वालमालागरिम्णा
पुष्टेनेष्टैस्तपोभिर्लयसमयतमस्तोमलीढान्तराणाम् ॥
नृणां पूर्णात्मबोधप्रमदमविदुषां दृष्टिरुन्मीलिता द्राक्
यष्टव्यः सृष्टिनाथ स तु सततमतः सर्ववेदैकसर्गः ॥१७॥

तदुत्तरं सानुशयं शैवाः ।

यदङ्घ्रिप्रेक्षार्थागतमुदितवृन्दारकजनः
प्रभाचक्रभ्राजन्मुकुटतटसङ्घट्टगलितैः ॥

१ स्थानानि । २ यज्ञस्थानम् ।३ व्यसने।४ हिरण्यगर्भो देव (ब्रह्मदेव.)।

स्फुरद्रत्नैर्नित्यं जनितासिकतं प्राङ्गणमहो
यदीयं त देवं भवमिह भजामः सुरवरम् ॥ १८ ॥

तदूर्ध्वं भागवताः ।

यो नेत्रश्रुतिभारतीप्रभृतिभिर्विज्ञायते नो गुणै-
र्यश्चाम्नायसमूहशीलनपरैस्तात्पर्यवृत्त्योच्यते ॥
तत्त्वानां निचयं प्रविष्ट इति या सम्भाव्यते स्वेच्छया
भक्तानां च भवाय भाविततनुः सेव्यो हरिः सर्वदा॥१९॥

इत्याग्रहग्रहोपमग्रस्तान्तरात्मानो महात्मानः स्वस्वोपासनवासनापरवशत्वेन परस्परं निजगदुः । ततः केचित् सुविचारशीलनपराः । आः किमेतेन विचाराचतुरेण भवतां विवादेन । तन्निशम्य वैष्णवादयः सर्वेऽप्येकीभूताः । कथमविचाराचतुरत्वमस्मद्विवादस्य यतो ब्रह्मादिदेवतानाम् ।

तिसृणामपि भूरिभाग्यभाजां जगदीशत्वमयं जगाद देवः ॥
स्मृतयश्च ततो वयं प्रपन्नाः शरणं तच्चरणावघापहत्यै ॥२०॥

विवेकिनः सत्यमुक्तं तथापि । यथा वा ।

दीपानामरुणासितादिकाचसारैः
क्लृप्तेषु स्फुटचषकेषु संस्थितानाम् ॥
दीपत्वं यदि च समं तथापि कान्तिः
श्वेतस्थे बहुलतमा तमांसि हन्ति ॥ २१ ॥

एवमेव निगमस्तुतपदनीरजानां तदुपाधिकृतवैषम्यजुषां तेषामीश्वरत्वाविशेषेपि यतस्तूर्णमर्णवसारे संसारे निमज्जतां जन्मिनामज्ञान-

---

१ स्वतन्त्रपात्रेषु ।

